# माध्यमिककक्षा - संस्कृतसाहित्यम् (२४८)

## मन्त्रणामण्डलम्

**आचार्यः चन्द्र-भूषण-शर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यविषय-निर्मिति-समितिः

**समितेः अध्यक्षः**
**स्वामी आत्मप्रियानन्दः**
कुलपतिः. रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**समितेः उपाध्यक्षः**
**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. शशी-प्रभा-कुमारः**
प्राध्यापिका (संस्कृताध्यनविशेषकेन्द्रम्)
जवाहरलाल-नेहरू-विश्वविद्यालयः, नवदेहली

**डॉ. भास्करानन्द-पाण्डेयः**
उपप्राचार्यचरः, सर्वोदय-बाल-विद्यालयः, नवदेहली

**श्रीमान् पलाश-घोडइः**
सहायकप्राध्यापकः (संस्कृतविभागः)
राजा-नरेन्द्र-लाल-खान-महिला-महाविद्यालयः
मण्डलम् - पश्चिममेदिनीपुरम् - ७२११०२ (प.वङ्गम्)

**श्रीमान् सुमन्त-चौधुरी**
सहायकप्राध्यापकः (संस्कृतविभागः)
सबं-सजनीकान्त-महाविद्यालयः
पत्रालयः - लुटुनिया, रक्षालयः - सबं
मण्डलम् - पश्चिममेदिनीपुरम् - ७२१ १६६ (प.वङ्गम्)

**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S) (संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५ (प. वङ्गम्)

**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
पत्रालयः - इटाचुना, मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः, रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम् ,नोएडा- २०१ ३०९

## पाठ्यक्रम-समन्वयकः

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम् , नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्


**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)


## पाठलेखकाः


**(पाठः १, २, ३, ११-१५)**
**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
पत्रालयः - इटाचुना
मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**(पाठः ४-७)**
**श्रीमान् राहुलगाजिः**
अनुसन्धाता (संस्कृतविभागः)
यादवपुरविश्वविद्यालयः
कलिकाता - ७०० ०३२ (प.वङ्गम्)

**(पाठः ८)**
**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः ९-१०)**
**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S) (संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम् - राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५
पश्चिमवङ्गम्

**(पाठः १६-१८)**
**श्रीमान् पलाश-घोडइः**
सहायकप्राध्यापकः (संस्कृतविभागः)
राजा-नरेन्द्र-लाल-खान-महिला-महाविद्यालयः
मण्डलम् - पश्चिममेदिनीपुरम् - ७२११०२ (प.वङ्गम्)

**(पाठः १९-२२)**
**श्रीमान् सुमन्त-चौधुरी**
सहायकप्राध्यापकः (संस्कृतविभागः)
सबं-सजनीकान्त-महाविद्यालयः
पत्रालयः - लुटुनिया, रक्षालयः - सबं
मण्डलम् - पश्चिममेदिनीपुरम् - ७२१ १६६ (प.वङ्गम्)


## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च


**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**

**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्णाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं संस्कृतसाहित्यस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

डॉ. चन्द्रभूषणशर्मा
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

संस्कृतसाहित्यस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्सति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।**
**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्।।**
**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी।।**

श्री संजय-कुमार-सिन्हा
निदेशकः (शैक्षिकविभागस्य)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य माध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

काव्यस्य काव्यशास्त्रस्य च परमं फलम् भवति रसः इति विदुषाम् अभिप्रायः अनुभवश्च समेषाम्। आनन्दो हि रसस्वरूपम्। सर्वेषाम् प्राणिनाम् सर्वं कार्यम् आनन्दे सुखे वा पर्यवस्यतु इतीच्छा सर्वप्रबला। तथा काव्यस्य सर्वे विषयाः रसे पर्यवस्यन्ति। काव्यानां नैके प्रकाराः सन्ति। काव्यप्रपञ्चः च अति महान्। बहूनि च काव्यानि सन्ति। तेषु विविधानां काव्यांशानां चयनं कृत्वा अत्र पाठ्यत्वेन योजना कृता। एवञ्च साहित्यस्य सामान्यस्वरूपं काव्यस्य स्वरूपादिकं भेदाः इति प्रारम्भिकं ज्ञानमत्र कार्यते। पारम्परिकगुरुकुलेषु यया पद्धत्या पाठः प्रदीयते तस्य अवलम्बः यथासम्भवमत्र प्रतिपादने कृतो विद्यते।

माध्यमिककक्षायां प्रदत्तः संस्कृतसाहित्यम् इति विषयः अपि अत्यन्तम् उपकारकः वर्तते। छात्रः अस्य अध्ययनेन ज्ञानपीनः आनन्दाप्लुतः च भवेत्। अस्य पठनेन अध्येता अन्येषु काव्येषु प्रवेशाय योग्यो विधास्यते। एतत्सामग्री काव्यानां काव्यशास्त्रस्य च सश्रद्धम् अध्ययने प्रवेशाय प्रोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः द्वयोः पुस्तकयोः कल्पितोऽस्ति।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु।

राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकुटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥ ॐ शान्तिः शान्तिः शान्तिः॥**


भवत्कल्याणकामी

राम-नारायण-मीणा

पाठ्यक्रमसमन्वयकः (शैक्षिकम्)

राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## पुस्तकम्- १

### सुभाषितादिकम्

१. सुभाषितानि- १

२. सुभाषितानि- १

३. प्रहेलिकाः समस्याश्लोकाः च

### कथासाहित्यम्

४. वेतालपञ्चविंशतिः-१

५. वेतालपञ्चविंशतिः-२

६. शुकसप्ततिः

७. पञ्चतन्त्रम्

### काव्यशास्त्रपरिचयः

८. काव्यशास्त्रप्रवेशः-१

९. काव्यशास्त्रप्रवेशः-२

१०. काव्यशास्त्रप्रवेशः-३

११. काव्यप्रकाराः

## पुस्तकम्- २

### रामायणाध्ययनम्

(वाल्मीकिरामायणे किष्किन्धाकाण्डे तृतीयसर्गे १-३९ श्लोकाः)

१२. राम-हनूमत्-संगमः

१३. हनुमत्कृता रामलक्ष्मणप्रशंसा

१४. रामकृता हनुमत्प्रशंसा

१५. रामसुग्रीवयोः सख्यम्

### कर्णभारम्

१६. कर्णस्य परितापः

१७. अस्त्रस्य वृत्तान्तः

१८. कवचकुण्डलदानम्

### किरातार्जुनीयम्

(प्रथमसर्गे १-३० श्लोकाः)

१९. वनेचरस्य चरानुरूपं वचनम्

२०. कपटस्य दुर्योधनस्य धर्माचरणम्

२१. शङ्कितस्य दुर्योधनस्य नीतिकौशलम्

२२. युधिष्ठिरस्य प्रबोधः

# संस्कृतसाहित्यम्

# माध्यमिककक्षा

## द्वितीयं पर्व

# रामायणम्

साम्प्रतिकसमये संस्कृतम् हि काचित् भाषा इति एव न विस्मरन्ति जनाः। वयम् अस्य संस्कृतस्य माहात्म्यं स्पष्टतया न जानीमः। संस्कृतं हि देवानां तथा वेदद्रष्टॄणाम् ऋषीणां भाषा। अस्या भाषायाः व्यवहारेण वयं गर्वम् अनुभवामः। परन्तु पाश्चात्यसंस्कृतिम् अनुसरन्तः केचित् दिग्भ्रान्ताः अपि पुनः लब्धप्रबोधाः सम्प्रति अस्याः व्यवहारे गर्वम् अनुभवन्ति। "संस्कृतं संस्कृतिश्च सहगामिन्यौ" इति स्वामिविवेकानन्दपादाः उक्तवन्तः। अतः स्वसंस्कृतिं रक्षद्भिः अस्माभिः सर्वैरेव विशेषतः भारतीयैः संस्कृतस्य सम्मानः अवश्यं करणीयः। सम्पूर्णेऽस्मिन् संस्कृतजगति वर्तन्ते बहूनि मनोहराणि काव्यरत्नानि। तेषु आदिकाव्यं तावत् रामायणम् इति प्रसिद्धिः वर्तते। अस्य महाकाव्यस्य रचयिता महर्षिः वाल्मीकिः। वाल्मीकिविषये वयं सर्वे एव जानीमः यत् रत्नाकरनामकः कश्चन दस्युः नारदमुनिना प्रचोदितः सन् ऋषिरूपेण परिवर्तितः ज्ञानं च प्राप्य भगवतः श्रीरामस्य वृत्तान्तं रामयणाख्यकाव्यात्मना निबबद्ध इति।

रामस्य अयनं (मार्गः) यस्मिन् काव्ये तत् रामायणम् इति रामायणशब्दस्य व्युत्पत्तिः। अर्थात् भगवान् श्रीरामः येन मार्गेण जीवनं यापितवान् तद्विषये यस्मिन् काव्ये वर्णितं वर्तते तत् काव्यं हि रामायणम्। सम्पूर्णे रामायणग्रन्थे चतुर्विंशतिसहस्रं (२४,०००) श्लोकाः सन्ति। तत्र सप्तसु काण्डेषु एताः श्लोकाः विभक्ताः। अस्मिन् संसारे केन प्रकारेण स्थातव्यम् इत्यस्मिन् विषये स्पष्टं ज्ञानं लभ्यते रामायणे। तस्मात् अद्यापि भारतवर्षस्य बहुत्र गृहेषु रामायणं पठ्यते। संस्कृतजगति बहुषु रमणीयेषु महाकाव्येषु सत्सु अपि जनानां हृदि रामायणस्य यत् स्थानं वर्तते, तत् प्राप्तुं तानि काव्यानि अनर्हाणि एव। प्रायः सर्वे भारतीया एव आबालात् मातृमुखात् पितामहीमुखात् वा रामायणस्य कथां शृण्वन्ति। भारतवर्षे एवं कतिपये एव लभ्यन्ते, ये रामायणस्य कथां न जानन्ति। रामायणस्थेषु सप्तसु काण्डेषु अतिप्रसिद्धं तावत् किष्किन्धाकाण्डम्। तस्मिन् काण्डे वर्तमानः रामहनुमतोः प्रथमसंवादः सहृदयहृदयान् पुनः पुनः आह्लादयति। अस्मिन् विषये जनाः बहु श्रुतवन्तः, दूरदर्शनादौ दृष्टवन्तश्च। परन्तु वाल्मीकिरामायणस्य पठनेन यादृशः स्पष्टः बोधः भवति, तादृशः बोधस्तु अन्येन पथा न सम्भवति। अतः संस्कृतभाषां सम्यग्रूपेण ज्ञात्वा अस्माभिः वाल्मीकिविरचितं रामायणम् अवश्यं पठनीयम्।

# १२

# रामायणम् - राम-हनूमत्-संगमः

## प्रस्तावना

अस्मिन् जगति प्रसिद्धेषु प्रह्लादादिभक्तेषु अन्यतमः तावत् हनुमान्। भगवतः रामस्य महान् भक्तः आसीत् अयं हनुमान्। स्वस्य सम्पूर्णे हृदये केवलं रामः एव विराजते इति दर्शनाय स स्ववक्षः विदार्य तत्र प्रभुः रामः प्रभुपत्नी सीता च विराजेते इति दर्शितवान्। अधुनापि एवम् उच्यते यत् यत्र यत्र रघुनाथकीर्तनं क्रियते तत्र तत्र अद्यापि हनुमान् उपस्थितः भवति। एतादृशस्य भक्तस्य प्रभुणा सह प्रथमः साक्षात्कारः कीदृशः आसीत् इति चिन्तनेन एव अस्माकं मनसि महान् आनन्दः उत्पद्यते। अतः अस्मिन् पाठे वयं तम् एव प्रथमसाक्षात्कारं सप्रसङ्गम् अवलोकयामः। तत्र हनुमान् सुग्रीवादेशानुसारं भिक्षुकवेषेण रामलक्ष्मणयोः परिचयं ज्ञातुं तयोः समीपं गच्छति। परस्परस्वरूपम् अजानन्तौ एव भक्तशिष्यौ उभौ उभाभ्यां सह प्रथमं मिलतः। ततः परं किं भविष्यति इति तु वयं पाठस्य पठनानन्तरं स्वयं ज्ञास्यामः। अस्मिन् पाठे दश श्लोकाः सन्ति। अस्य पाठस्य पठनेन अवश्यम् एव अस्माकं महान् आनन्दः भविष्यति।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- रामहनुमतोः प्रथमसाक्षात्कारविषये ज्ञातुं शक्नुयात्।
- हनुमतः वाग्माधुर्यं ज्ञातुं शक्ष्यति।
- रामलक्ष्मणयोः वीरत्वविषयकं बोधं प्राप्स्यति।
- रामायणकाले जनानाम् आचारः कथम् आसीत् इति ज्ञास्यति।
- श्लोके स्थितानां पदानाम् अन्वयः केन प्रकारेण कर्तव्यः इति जानीयात्।
- श्लोकानां व्याख्या केन प्रकारेण कर्तव्या इत्यस्मिन् विषये ज्ञास्यति।
- उपमालङ्कारस्य विषये किञ्चित् ज्ञानं प्राप्स्यति।

## १२.१) मूलपाठः

**वचो विज्ञाय हनुमान् सुग्रीवस्य महात्मनः ।**
**पर्वतात् ऋष्यमूकात् तु पुप्लुवे यत्र राघवौ ॥१॥**

**कपिरूपम् परित्यज्य हनुमान् मारुतात्मजः ।**



भिक्षुरूपम् ततो भेजे शठबुद्धितया कपिः ॥२॥

ततः च हनुमान् वाचा श्लक्ष्णया सुमनोज्ञया ।
विनीतवत् उपागम्य राघवौ प्रणिपत्य च ॥३॥

आबभाषे च तौ वीरौ यथावत् प्रशशंस च ।
संपूज्य विधिवद् वीरौ हनुमान् वानरोत्तमः ॥४॥

उवाच कामतो वाक्यम् मृदु सत्यपराक्रमौ ।
राजर्षिदेवप्रतिमौ तापसौ संशितव्रतौ ॥५॥

देशम् कथम् इमम् प्राप्तौ भवन्तौ वरवर्णिनौ ।
त्रासयन्तौ मृगगणान् अन्यांश्च वनचारिणः ॥६॥

पम्पातीररुहान् वृक्षान् वीक्षमाणौ समन्ततः ।
इमाम् नदीं शुभजलां शोभयन्तौ तरस्विनौ ॥७॥

धैर्यवन्तौ सुवर्णाभौ कौ युवाम् चीरवाससौ ।
निःश्वसन्तौ वरभुजौ पीडयन्ताविमाः प्रजाः ॥८॥

सिंहविप्रेक्षितौ वीरौ महाबलपराक्रमौ ।
शक्रचापनिभे चापे गृहीत्वा शत्रुनाशनौ ॥९॥

श्रीमन्तौ रूपसंपन्नौ वृषभश्रेष्ठविक्रमौ ।
हस्तिहस्तोपमभुजौ द्युतिमन्तौ नरर्षभौ ॥१०॥

## १२.२) इदानीं मूलपाठम् अवगच्छाम

**वचो विज्ञाय हनुमान् सुग्रीवस्य महात्मनः।**
**पर्वतादृष्यमूकात् तु पुप्लुवे यत्र राघवौ।।१।।**

**अन्वयः** - हनुमान् महात्मनः सुग्रीवस्य वचः विज्ञाय यत्र राघवौ (आस्ताम्), ऋष्यमूकात् पर्वतात् तु (तत्र) पुप्लुवे।

**अन्वयार्थः** - हनुमान् महात्मनः महाबुद्धेः सुग्रीवस्य सुग्रीवनामकस्य वानरराजस्य वचः वचनं विज्ञाय अवधार्य यत्र राघवौ रामलक्ष्मणौ (आस्ताम्), ऋष्यमूकात् ऋष्यमूकनामधेयात् पर्वतात् गिरेः तु (तत्र) पुप्लुवे जगाम।



**सरलार्थः** - सुग्रीवसचिवः हनुमान् कपिराजस्य सुग्रीवस्य वचनानुसारं रामलक्ष्मणयोः स्वरूपं जिज्ञासुः ऋष्यमूकपर्वतात् तयोः समीपं गतवान् इति।

**तात्पर्यार्थः** - अनेन श्लोकेन महर्षिः वाल्मीकिः रामलक्ष्मणाभ्यां सह हनुमतः प्रथमसाक्षात्कारं वर्णयितुम् आरभते। कपिराजः सुग्रीवः धनुर्बाणादिशस्त्रयुक्तौ दीर्घबाहुसम्पन्नौ रामलक्ष्मणौ दूरात् दृष्टवान्, अतः तौ वालिना प्रेषितौ इति मत्वा स भीतः सञ्जातः। तस्मात् स तयोः आगमनकारणज्ञानाय स्वसचिवं हनुमन्तम् आदिष्टवान्। हनुमान् च तद्वचनानुसारं तयोः आगमनकारणं ज्ञातुम् ऋष्यमूकपर्वतात् तयोः समीपं प्रस्थितः।

**व्याकरणविमर्शः -**

- विज्ञाय - विपूर्वकात् ज्ञानार्थकात् ज्ञाधातोः ल्यप्प्रत्यये विज्ञाय इति रूपम्।
- पुप्लुवे - गमनार्थकात् प्लुङ्-धातोः लिटि प्रथमपुरुषैकवचने पुप्लुवे इति रूपम्।

**सन्धिकार्यम् -**

- वचो विज्ञाय = वचः + विज्ञाय। (विसर्गसन्धिः)
- पर्वतादृष्यमूकात् = पर्वतात् + ऋष्यमूकात्। (जश्त्व-सन्धिः))

**प्रयोगपरिवर्तनम्** - हनुमता महात्मनः सुग्रीवस्य वचः विज्ञाय यत्र राघवाभ्याम् (अभूयत), ऋष्यमूकात् पर्वतात् तु (तत्र) पुप्लुवे।

**कपिरूपं परित्यज्य हनुमान् मारुतात्मजः।**
**भिक्षुरूपं ततो भेजे शठबुद्धितया कपिः।।२।।**

**अन्वयः** - मारुतात्मजः कपिः हनुमान् शठबुद्धितया कपिरूपं परित्यज्य ततः भिक्षुरूपं भेजे।

**अन्वयार्थः** - मारुतात्मजः मारुतपुत्रः कपिः वानरः हनुमान् शठबुद्धितया धूर्तबुद्धितया कपिरूपं वानररूपं परित्यज्य विहाय ततः भिक्षुरूपं भिक्षुकवेषं भेजे प्राप।

**सरलार्थः** - मारुतपुत्रः हनुमान् वञ्चकबुद्ध्या स्वस्वरूपं वानररूपम् आच्छाद्य भिक्षुकवेषं धृत्वा रामलक्ष्मणोः समीपं गतः।

**तात्पर्यार्थः** - वानराणां शठबुद्धित्वं लोके प्रसिद्धं वर्तते। तस्मात् सुग्रीववचनानुसारं रामलक्ष्मणयोः समीपं गन्तुम् उद्यतः हनुमान् चिन्तितवान् यत् - हनुमान् तु वानरः, अतः सः अपि शठबुद्धिसम्पन्नः इति विज्ञाय रामो यदि तेन सह भाषणं न कुर्यात् इति। तस्मात् स आत्मनः स्वरूपं वानररूपम् आच्छाद्य भिक्षुकवेषं धृतवान्। भिक्षुकादिदरिद्रेषु मनुष्येषु महतां सदैव दयाभावः दृश्यते। अतः रामलक्ष्मणयोः अपि भिक्षुकवेषधारिणि तस्मिन् दयाभावः भविष्यति इति चिन्तितवान् हनुमान्। तस्मात् एव स रूपान्तरम् अगृहीत्वा भिक्षुकरूपम् एव गृहीतवान्। तेन रामलक्ष्मणौ दीनदयालू इति हनुमान् प्रागेव ज्ञातवान् इति सूच्यते। महर्षिः वाल्मीकिः हनुमतः बुद्धेः प्रभावम् अपि वर्णयति प्रस्तुतश्लोकेन।



**व्याकरणविमर्शः -**

- परित्यज्य - परिपूर्वकात् त्यागार्थकात् त्यज्-धातोः ल्यप्प्रत्यये परित्यज्य इति रूपम्।
- मारुतात्मजः - मारुतस्य आत्मजः मारुतात्मजः इति षष्ठीतत्पुरुषसमासः।
- भेजे - सेवार्थकात् भज्-धातोः लिटि प्रथमपुरुषैकवचने भेजे इति रूपम्।

**सन्धिकार्यम् -**

- ततो भेजे = ततः + भेजे। (विसर्गसन्धिः)

**प्रयोगपरिवर्तनम्** - मारुतात्मजेन कपिना हनुमता शठबुद्धितया कपिरूपं परित्यज्य ततः भिक्षुरूपं भेजे।

**ततश्च हनुमान् वाचा श्लक्ष्णया सुमनोज्ञया।**
**विनीतवदुपागम्य राघवौ प्रणिपत्य च।।३।।**
**आबभाषे च तौ वीरौ यथावत् प्रशशंस च।**

**अन्वयः** - ततः विनीतवत् हनुमान् तौ वीरौ राघवौ उपागम्य प्रणिपत्य च श्लक्ष्णया सुमनोज्ञया वाचा आबभाषे यथावत् प्रशशंस च।

**अन्वयार्थः** - ततः भिक्षुकरूपाधारणानन्तरं हनुमान् विनीतवत् विनयी सन् तौ वीरौ शूरौ राघवौ रामलक्ष्मणौ उपागम्य आगम्य प्रणिपत्य प्रणम्य च श्लक्ष्णया मधुरया सुमनोज्ञया मनोहरया वाचा गिरा आबभाषे भाषितवान् यथावत् प्रशशंस प्रशस्तवान् च।

**सरलार्थः** - भिक्षुकवेषधारी हनुमान् विनयभावयुक्तः सन् रामलक्ष्मणयोः समीपं गतवान्, तत्र गत्वा च स आदौ तयोः प्रणामं कृतवान्। तदनन्तरं स्वस्य मधुरया रम्यया च वाण्या ताभ्यां सह वार्तालापम् आरब्धवान्, ततः तयोः वीरयोः यथोचितं स्तुतिं च कृतवान्।

**तात्पर्यार्थः** - अस्मिन् श्लोके महर्षिः वाल्मीकिः हनुमतः विनयं वर्णयति। भिक्षुकरूपाधारणानन्तरं हनुमान् रामलक्ष्मणयोः आगमनकारणं जिज्ञासुः तयोः समीपम् उपागतः। तत्र सविनयम् आगत्य स आदौ तौ प्रणतवान्। भिक्षुरूपः हनुमान् रामलक्ष्मणौ प्रणतवान् इत्यनेन गृहस्थान् प्रति भिक्षुणा प्रणामः कर्तव्यः इति ज्ञायते। तदनन्तरं हनुमान् स्वस्य मधुरेण वचसा तयोः यथावत् प्रशंसां कृतवान्। यथावत् प्रशंसां कृतवान् इत्यनेन हनुमान् तयोः मिथ्यास्तुतिं न कृतवान् इति ज्ञापयितुम् इच्छति महर्षिः वाल्मीकिः। तदनन्तरं स स्वस्य सुमधुरया सुमनोहरया अर्थतः अतिरम्यया च वाण्या ताभ्यां सह भाषितुम् आरब्धवान्। अनेन श्लोकेन हनुमतः वाग्माधुर्यमपि वर्णयति महर्षिः वाल्मीकिः।

**व्याकरणविमर्शः -**

- सुमनोज्ञया - सुष्ठु मनोज्ञं सुमनोज्ञम् इति गतिसमासः, तया सुमनोज्ञया।
- उपागम्य - उपपूर्वकात् गमनार्थकात् गम्-धातोः ल्यप्प्रत्यये उपागम्य इति रूपम्।
- प्रणिपत्य - प्रपूर्वकात् निपूर्वकात् च गमनार्थकात् पत्-धातोः ल्यप्प्रत्यये प्रणिपत्य इति रूपम्।



- आबभाषे - आपूर्वकात् भाष्-धातोः लिटि प्रथमपुरुषैकवचने आबभाषे इति रूपम्।
- प्रशशंस - प्रपूर्वकात् स्तुस्त्यर्थकात् शंस्-धातोः लिटि प्रथमपुरुषैकवचने प्रशशंस इति रूपम्।

**सन्धिकार्यम् -**

- ततश्च = ततः + च। (विसर्गसन्धिः)
- विनीतवदुपागम्य = विनीतवत् + उपागम्य। (जश्त्व-सन्धिः)

**प्रयोगपरिवर्तनम् -** ततः विनीतवत् हनुमता तौ वीरौ राघवौ उपागम्य प्रणिपत्य च श्लक्ष्णया सुमनोज्ञया वाचा आबभाषे यथावत् प्रशशंसे च।

**संपूज्य विधिवद्वीरौ हनुमान् वानरोत्तमः।।४।।**
**उवाच कामतो वाक्यं मृदु सत्यपराक्रमौ।**

**अन्वयः -** वानरोत्तमः हनुमान् वीरौ सत्यपराक्रमौ (रामलक्ष्मणौ) विधिवत् संपूज्य कामतः मृदु वाक्यम् उवाच।

**अन्वयार्थः -** वानरोत्तमः मर्कटश्रेष्ठः हनुमान् वीरौ शूरौ सत्यपराक्रमौ सत्यपालकौ (तौ रामलक्ष्मणौ) विधिवत् यथाविधि संपूज्य पूजयित्वा कामतः सुग्रीवेच्छानुसारात् मृदु कोमलं वाक्यं वचनं उवाच उक्तवान्।

**सरलार्थः -** हनुमान् रामलक्ष्मणयोः समीपं गत्वा, आदौ विध्यनुसारं तयोः पूजनं कृतवान्। ततः सुग्रीवेच्छानुसारं स स्वस्य मधुरया मनोहरया वाचा ताभ्यां सह मृदु वाक्यं वक्तुम् आरब्धवान्।

**तात्पर्यार्थः -** सुग्रीवादेशानुसारं हनुमान् धृतभिक्षुकवेषः रामलक्ष्मणौ उपागतः। तौ प्राप्य च सः अतिथेः पूजनविषये यादृशः विधिः निर्दिष्टः अस्ति, तदनुसारेण तयोः सत्यपालकयोः पूजनमपि कृतवान्। रामलक्ष्मणौ सत्यपराक्रमौ इत्यनेन तयोः माहाम्यं ज्ञायते। अत एव तौ पूज्यौ इति निश्चितवान् हनुमान्। शिष्टाः जनाः सर्वदा एव पूज्यानां पूजनं कुर्वन्ति। अतः हनुमान् अपि पूज्ययोः रामलक्ष्मणयोः पूजनेन शिष्टमार्गस्य एव पथिकः इति ज्ञायते। वस्तुतः हनुमान् रामोपरि तस्य भक्तिवशात् एव तस्य पूजनं कृतवान् इत्यपि वक्तुं शक्यते। पूजनानन्तरं च हनुमान् यदर्थं सुग्रीवः तम् अत्र प्रेषितवान् तत् स्मरणे संस्थाप्य स्वस्य मधुरवचनेन तत् वक्तुम् आरब्धवान्। हनुमान् वानरोत्तमः इत्यनेन हनुमतः माहात्म्यं सूचयति महर्षिः।

**व्याकरणविमर्शः -**

- संपूज्य – सम्-पूर्वकात् पूज्-धातोः ल्यप्प्रत्यये संपूज्य इति रूपम्।
- वानरोत्तमः - वानराणाम् उत्तमः वानरोत्तमः इति षष्ठीतत्पुरुषसमासः।
- उवाच – भाषणार्थकात् वच्-धातोः लिटि प्रथमपुरुषैकवचने उवाच इति रूपम्।
- सत्यपराक्रमौ - सत्यम् एव पराक्रमः ययोस्तौ सत्यपराक्रमौ इति बहुव्रीहिसमासः।



**सन्धिकार्यम् -**

- विधिवद्वीरौ = विधिवत् + वीरौ। (जश्त्व-सन्धिः)
- कामतो वाक्यम् = कामतः + वाक्यम्। (विसर्गसन्धिः)

**प्रयोगपरिवर्तनम्** - वानरोत्तमेन हनुमता वीरौ सत्यपराक्रमौ (रामलक्ष्मणौ) विधिवत् संपूज्य कामतः मृदु वाक्यम् ऊचे।

**राजर्षिदेवप्रतिमौ तापसौ संशितव्रतौ।।५।।**
**देशं कथमिमं प्राप्तौ भवन्तौ वरवर्णिनौ।**
**त्रासयन्तौ मृगगणान् अन्यांश्च वनचारिणः।।६।**

**अन्वयः** - राजर्षिदेवप्रतिमौ संशितव्रतौ वरवर्णिनौ, मृगगणान् अन्यान् वनचारिणः च त्रासयन्तौ भवन्तौ तापसौ इमं देशं कथं प्राप्तौ।

**अन्वयार्थः** - राजर्षिदेवप्रतिमौ राजर्षीणां देवतानां च प्रतिकृतिसदृशौ संशितव्रतौ तीक्ष्णव्रतपालकौ वरवर्णिनौ ब्रह्मचारिश्रेष्ठौ मृगगणान् हरिणसमूहान् अन्यान् इतरान् वनचारिणः अरण्यचारिणः च त्रासयन्तौ स्वतेजसा धर्षयन्तौ भवन्तौ तापसौ तपस्विनौ इमम् एतं देशं प्रदेशं कथं केन प्रकारेण प्राप्तौ आगतौ।

**सरलार्थः** - हनुमान् रामलक्ष्मणयोः पूजनं प्रशंसादिकं त कृत्वा तौ पृष्टवान् यत् - राजर्षीणां देवतानां च यथा प्रतिकृतिः भवति, तादृशप्रतिकृतिविशिष्टौ कठोरव्रतपालकौ भवन्तौ स्तः। परन्तु भवन्तौ ब्रह्मचारिवरौ वनस्थान् मृगान् अन्यान् वनचारिणः जीवान् च भीतान् कुर्वन्तौ केन प्रकारेण इमं दुर्गमं देशम् आगतौ इति।

**तात्पर्यार्थः** - रामलक्ष्मणौ ऋष्यमूकपर्वतं प्रति आगतवन्तौ। अत एव हनुमान् तयोः आगमनकारणं पृष्टवान् प्रस्तुतश्लोकेन। देवर्षीणां देवतानां च यादृशी देहाकृतिः भवति, रामलक्ष्मणयोः शरीरयोः अपि तादृशी एव आकृतिः आसीत् । किञ्च तौ तपस्विनौ कठोरव्रतपालकौ आस्ताम्। ब्रह्मचर्यपालनात् ब्रह्मचारिषु महत् तेजः उत्पद्यते, यत् तेन साधारणाः किञ्चित् त्रस्ता भवन्ति। अत एव रामलक्ष्मणयोः ब्रह्मचर्यतेजःप्रभावात् वनस्थाः मृगाः किञ्च अन्याः वन्यप्राणिनः भीताः सञ्जाताः। तस्मात् एव हनुमान् तौ प्रति पृष्टवान् यत् सुन्दराकृतिविशिष्टौ एवंविध-ब्रह्मचर्यतेजोविशिष्टौ भवन्तौ तपस्विनौ, यत्र साधारणाजनाः नागच्छन्ति तादृशम् इमं दुर्गमं देशं कथम् आगतौ इति। वस्तुतः प्रस्तुतेऽस्मिन् श्लोके महर्षिः वाल्मीकिः रामलक्ष्मणयोः शरीरसौन्दर्यं कठोरव्रतपालकत्वं ब्रह्मचर्यतेजःप्रभावत्वं च वर्णयति।

**व्याकरणविमर्शः -**

- राजर्षिदेवप्रतिमौ - राजर्षयः च देवाश्च राजर्षिदेवाः इति इतरेतरयोगद्वन्द्वसमासः। राजर्षिदेवानां प्रतिमा इव प्रतिमा ययोः तौ राजर्षिदेवप्रतिमौ इति उपमानपदपूर्वकबहुव्रीहिसमासः।
- संशितव्रतौ - संशितौ (तीक्ष्णौ) व्रतौ ययोस्तौ संशितव्रतौ इति बहुव्रीहिसमासः।
- वरवर्णिनौ - वरौ च तौ वर्णिनौ वरवर्णिनौ इति कर्मधारयसमासः।



- त्रासयन्तौ - भयार्थकात् त्रास-धातोः णिच्प्रत्यये शतृप्रत्यये च प्रथमाबहुवचने त्रासयन्तौ इति रूपम्।
- मृगगणान् - मृगानां गणाः मृगगणाः इति षष्ठीतत्पुरुषसमासः, तान् मृगगणान्।
- वनचारिणः - वने चरन्ति इति वनचारिणः। अस्य अर्थो हि वन्यपशवः इति।

**सन्धिकार्यम् -**

- अन्यांश्च = अन्यान् + च। (हल्-सन्धिः)

**प्रयोगपरिवर्तनम् -**

- राजर्षिदेवप्रतिमाभ्यां संशितव्रताभ्यां वरवर्णिभ्यां मृगगणान् अन्यान् वनचारिणः च त्रासयद्भ्यां भवद्भ्यां तापसाभ्याम् अयं देशः कथं प्राप्तः।

**पम्पातीररुहान् वृक्षान् वीक्षमाणौ समन्ततः।**
**इमां नदीं शुभजलां शोभयन्तौ तरस्विनौ।।७।।**
**धैर्यवन्तौ सुवर्णाभौ कौ युवां चीरवाससौ।**
**निःश्वसन्तौ वरभुजौ पीडयन्ताविमाः प्रजाः।।८।।**

**अन्वयः -** समन्ततः पम्पातीररुहान् वृक्षान् वीक्षमाणौ इमां शुभजलां नदीं शोभयन्तौ तरस्विनौ धैर्यवन्तौ सुवर्णाभौ चीरवाससौ निःश्वसन्तौ वरभुजौ इमाः वन्याः प्रजाः पीडयन्तौ युवां कौ।

**अन्वयार्थः -** समन्ततः चतुर्दिक्षु पम्पातीररुहान् पम्पातीरे जातान् वृक्षान् महीरुहान् वीक्षमाणौ पश्यन्तौ इमाम् एतां शुभजलां पवित्रसलिलां नदीं सरितं शोभयन्तौ भूषयन्तौ तरस्विनौ अतिबलवन्तौ धैर्यवन्तौ धैर्यशालिनौ सुवर्णाभौ स्वर्णसदृशशरीरौ चीरवाससौ जीर्णवस्त्रधरौ निःश्वसन्तौ क्लान्तौ वरभुजौ सुन्दरभुजौ इमाः एताः प्रजाः वन्यान् पीडयन्तौ पीडां प्रापयन्तौ युवां भवन्तौ कौ।

**सरलार्थः -** हनुमान् रामलक्ष्मणौ प्रति पृष्टवान् यत्- पम्पासरोवरस्य तटे स्थितान् वृक्षान् पश्यन्तौ किञ्च इमां पवित्रसलिलविशिष्टां पम्पानदीं स्वसौन्दर्येण भूषयन्तौ अतिबलवन्तौ स्वर्णसदृशदेहविशिष्टौ धैर्यशालिनौ जीर्णवस्त्रधरौ वनसञ्चारवशात् क्लान्तौ सुन्दरबाहुसम्पन्नौ एतान् वन्यान् स्वदुःखदर्शनेन दुःखीकुर्वन्तौ युवां कौ इति।

**तात्पर्यार्थः -** प्रस्तुतेऽस्मिन् श्लोके महर्षिः वाल्मीकिः, यत्र हनुमान् रामलक्ष्मणयोः परिचयं ज्ञातुं समागतः तत् स्थानं वर्णयति। तत् च स्थानं पम्पासरोवरतीरस्थम्। पम्पासरोवरस्य जलम् अतिपवित्रम् आसीत्। अतिबलवन्तौ तौ रामलक्ष्मणौ च तयोः पुरस्तात् पम्पासरोवरस्य तटे जातान् वृक्षान् पश्यन्तौ आस्ताम्। तयोः सौन्दर्येण स सरोवरः शोभितो जातः।

सुवर्णस्य यथा कान्तिः विद्यते तादृशी कान्तिः आसीत् तयोः शरीरे। परन्तु एवंकान्तियुक्तदेहसत्त्वेऽपि तयोः परिधाने आस्ताम् द्वौ अतिजीर्णवस्त्रौ। सुबाहुविशिष्टौ तौ सम्पूर्णं दिवसं व्याप्य इदं स्थानं प्राप्तुं वने सञ्चरितवन्तौ। अत एव वनसञ्चारात् सम्प्रति तौ अतीव क्लान्तौ सञ्जातौ। तयोः इदं क्लान्तिरूपं दुःखं दृष्ट्वा वनवासिनः जनाः अपि पीडिता जाताः। तस्मात् हनुमान् पृष्टवान् यत्



- पम्पासरोवरस्य तटे जातान् वृक्षान् पश्यन्तौ स्वसौन्दर्येण च तं सरोवरं शोभयन्तौ स्वर्णसदृशदेहविशिष्टौ अपि जीर्णवस्त्रधरौ सुबाहुसम्पन्नौ वनसञ्चारात् क्लान्तौ स्वदुःखदर्शनेन च अन्यान् अरण्यवासिनः पीडयन्तौ युवां कौ, को वा युवयोः परिचयः, केन वा कारणेन इमं दुर्गमं देशम् आगतौ इति। वस्तुतः अत्र पम्पासरोवस्य विस्तृतत्वात् तदर्थे नदी- इति प्रयोगः कृतः।

**व्याकरणविमर्शः -**

- पम्पातीररुहान् - पम्पायाः तीरं पम्पातीरम् इति षष्ठीतत्पुरुषसमासः। पम्पातीरे रोहन्ति इति पम्पातीररुहाः, तान् पम्पातीररुहान्।
- वीक्षमाणौ - विपूर्वकात् दर्शनार्थकात् ईक्ष्-धातोः शानच्प्रत्यये प्रथमाद्विवचने वीक्षमाणौ इति रूपम्।
- धैर्यवन्तौ - धैर्यम् अस्य अस्ति इत्यर्थे धैर्यशब्दात् मतुप्-प्रत्यये धैर्यवन्तौ इति रूपम्।
- सुवर्णाभौ - सुवर्णा आभा ययोस्तौ सुवर्णाभौ इति बहुव्रीहिसमासः।
- चीरवाससौ - चीरं (खण्डं) वासः (वस्त्रं) ययोस्तौ चीरवाससौ इति बहुव्रीहिसमासः।
- वरभुजौ - वरौ भुजौ ययोस्तौ वरभुजौ इति बहुव्रीहिसमासः।
- पीडयन्तौ - पीड-धातोः शतृप्रत्यये प्रथमाद्विवचने पीडयन्तौ इति रूपम्।

**सन्धिकार्यम् -**

- पीडयन्ताविमाः = पीडयन्तौ + इमाः। (अच्-सन्धिः)

**प्रयोगपरिवर्तनम् -**

- समन्ततः पम्पातीररुहान् वृक्षान् वीक्षमाणाभ्याम् इमां शुभजलां नदीं शोभयद्भ्यां तरस्विभ्यां धैर्यवद्भ्यां सुवर्णाभ्यां चीरवासोभ्यां निःश्वसद्भ्यां वरभुजाभ्याम् इमाः वन्याः प्रजाः पीडयद्भ्यां युवाभ्यां काभ्यां (भूयते)।

**सिंहविप्रेक्षितौ वीरौ महाबलपराक्रमौ।**
**शक्रचापनिभे चापे गृहीत्वा शत्रुनाशनौ।।९।**

**अन्वयः** - सिंहविप्रेक्षितौ शक्रचापनिभे चापे गृहीत्वा शत्रुनाशनौ महाबलपराक्रमौ वीरौ (युवां कौ)।

**अन्वयार्थः** - सिंहविप्रक्षितौ सिंहातिबलविक्रमौ शक्रचापनिभे इन्द्रधनुस्तुल्ये चापे धनुषी गृहीत्वा संगृह्य शत्रुनाशनौ रिपुविनाशकौ महाबलपराक्रमौ महाबलशालिनौ वीरौ शूरौ (युवां कौ)।

**सरलार्थः** - सुग्रीवसचिवः हनुमान् रामलक्ष्मणौ प्रति पृच्छति यत्- सिंहात् अति अधिकबलवन्तौ इन्द्रधनुःसदृशधनुर्द्वयं गृहीत्वा शत्रूणां नाशकौ महाबलशालिनौ वीरौ युवां कौ इति।

**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके महर्षिः वाल्मीकिः हनुमन्मुखेन रामलक्ष्मणयोः वीरत्वं वर्णयति। पशुराजस्य सिंहस्य प्रेक्षणं यथा सम्मुखस्थस्य कृते सर्वदा भयकरं भवति, तद्वत् प्रेक्षणम्



आसीत् रामलक्ष्मणयोः। तौ सिंहात् अपि अधिकबलवन्तौ आस्ताम्। महाबलशालिनोः तयोः पराक्रमात् शत्रवः अपि भीताः सञ्जाताः। देवेन्द्रस्य इन्द्रस्य धनुषः लक्ष्यं यथा न कदापि भ्रष्टं भवति, तथा अनयोः अपि धनुर्लक्ष्यं भ्रष्टं न भवति। धनुषः मुक्तिं प्राप्य शत्रुनाशनात् परम् एव अनयोः बाणः शान्तो भवति। तस्मात् हनुमान् तौ प्रति पृष्टवान् यत्- सिंहात् अपि अधिकबलवन्तौ महापराक्रमविशिष्टौ इन्द्रधनुःसदृशधनुर्धरौ युवां कौ, को वा युवयोः परिचयः, केन वा कारणेन इमं दुर्गमं देशम् आगतौ इति।

**व्याकरणविमर्शः -**

- सिंहविप्रेक्षितौ - सिंहस्य विप्रेक्षितं(प्रेक्षणं) सिंहविप्रेक्षितम् इति षष्ठीतत्पुरुषसमासः। सिंहविप्रेक्षितम् इव विप्रेक्षितं ययोस्तौ सिंहविप्रक्षितौ इति बहुव्रीहिसमासः।
- महाबलपराक्रमौ - महत् च तत् बलं महाबलम् इति कर्मधारयसमासः। महाबलम् एव पराक्रमः ययोस्तौ महाबलपराक्रमौ इति बहुव्रीहीसमासः।
- शक्रचापनिभे - शक्रस्य चापः शक्रचापः इति षष्ठीतत्पुरुषसमासः। शक्रचापेन निभे (तुल्ये) शक्रचापनिभे इति तृतीयातत्पुरुषसमासः।
- शत्रुनाशनौ - शत्रूणां नाशनौ शत्रुनाशनौ इति षष्ठीतत्पुरुषसमासः।

**प्रयोगपरिवर्तनम् -**

- सिंहविप्रेक्षितौ शक्रचापनिभे चापे गृहीत्वा शत्रुनाशनाभ्यां महाबलपराक्रमाभ्यां वीराभ्यां (युवाभ्यां काभ्यां भूयते)।

**अलङ्कारालोचना** - अस्मिन् श्लोके उपमालङ्कारः वर्तते। उपमालङ्कारस्य चत्वारः अंशाः भवन्ति, ते च उपमेयम्, उपमानं, सादृश्यवाचकपदम्, सादृश्यधर्मः चेति। उपमा द्विविधा भवति पूर्णोपमा, लुप्तोपमा चेति। यत्र एते चत्वारः अंशाः एव तिष्ठन्ति सा पूर्णोपमा भवति। यत्र च एतेषां चतुर्णां मध्ये कश्चित् एकः ततोऽधिकः वा अंशः न तिष्ठति सा लुप्तोपमा भवति। अत्र उपमेयं हि चापे इति। उपमानं हि शक्रचापे इति। सादृश्यवाचकपदं हि निभे इति। सादृश्यधर्मः हि शत्रुनाशकत्वम् इति। अस्मिन् श्लोके चतुर्णाम् अंशानाम् एव सत्त्वात् पूर्णोपमा वर्तते।

**श्रीमन्तौ रूपसंपन्नौ वृषभश्रेष्ठविक्रमौ।**
**हस्तिहस्तोपमभुजौ द्युतिमन्तौ नरर्षभौ।।१०।।**

**अन्वयः** - श्रीमन्तौ रूपसंपन्नौ वृषभश्रेष्ठविक्रमौ हस्तिहस्तोपमभुजौ द्युतिमन्तौ नरर्षभौ (युवां कौ)।

**अन्वयार्थः** - श्रीमन्तौ कान्तिमन्तौ रूपसंपन्नौ सौन्दर्ययुक्तौ वृषभश्रेष्ठविक्रमौ वृषभश्रेष्ठपराक्रमौ हस्तिहस्तोपमभुजौ गजशुण्डसदृशबाहुविशिष्टौ द्युतिमन्तौ तेजस्विनौ नरर्षभौ नरश्रेष्ठौ (युवां कौ)।

**सरलार्थः** - वानरोत्तमः हनुमान् रामलक्ष्मणौ प्रति पृच्छति यत्- कान्तिमन्तौ सौन्दर्यवन्तौ श्रेष्ठवृषभपराक्रमसदृशपराक्रमविशिष्टौ गजशुण्डसदृशभुजविशिष्टौ नरेषु उत्तमौ युवां कौ इति।



**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके महर्षिः वाल्मीकिः हनुमन्माध्यमेन रामलक्ष्मणयोः सौन्दर्यस्य वीरत्वस्य च प्रशंसां करोति। रामलक्ष्मणौ वने स्थितवान्, वने लब्धं भोजनं भुक्तवान्, तथापि राजपुत्रवत् कान्तिमन्तौ सौन्दर्यवन्तौ च आस्ताम्। वृषभेषु श्रेष्ठवृषभस्य यथा विक्रमः भवति तादृशविक्रमशालिनौ आस्ताम् एतौ द्वौ। गजस्य शुण्डायां यथा शक्तिः तिष्ठति, तथा शक्तिः आसीत् अनयोः बाहुद्वये। एतौ ब्रह्मचर्यपालनात् महातेजस्विनौ आस्ताम्। नराणां मध्ये श्रेष्ठौ आस्ताम् एतौ। अत एव हनुमान् पृष्टवान् यत् - एवंविध-सौन्दर्यवन्तौ एवंविध-शक्तिमन्तौ युवां कौ, को वा युवयोः परिचयः, केन वा कारणेन इमं दुर्गमं देशम् आगतौ इति।

**व्याकरणविमर्शः -**

- रूपसंपन्नौ - रूपेण संपन्नौ रूपसंपन्नौ इति तृतीयातत्पुरुषसमासः।
- वृषभश्रेष्ठविक्रमौ - वृषभेषु श्रेष्ठः वृषभश्रेष्ठः इति सप्तमीतत्पुरुषसमासः। वृषभश्रेष्ठस्य विक्रमः वृषभश्रेष्ठविक्रमः इति षष्ठीतत्पुरुषसमासः। वृषभश्रेष्ठविक्रमः इव विक्रमः ययोस्तौ वृषभश्रेष्ठविक्रमौ इति बहुव्रीहिसमासः।
- हस्तिहस्तोपमभुजौ - हस्तिनः हस्तौ हस्तिहस्तौ इति षष्ठीतत्पुरुषसमासः। हस्तिहस्तौ उपमा ययोस्तौ हस्तिहस्तोपमौ इति बहुव्रीहिसमासः। हस्तिहस्तोपमौ भुजौ ययोः तौ हस्तिहस्तोपमभुजौ इति बहुब्रीहिसमासः।
- नरर्षभौ - नरेषु ऋषभौ नरर्षभौ इति सप्तमीतत्पुरुषसमासः।

**प्रयोगपरिवर्तनम्** - श्रीमद्भ्यां रूपसंपन्नाभ्यां वृषभश्रेष्ठविक्रमाभ्यां हस्तिहस्तोपमभुजाभ्यां द्युतिमद्भ्यां नरर्षभाभ्यां (युवाभ्यां काभ्यां भूयते)।

**अलङ्कारालोचना** - अस्मिन् श्लोके उपमालङ्कारः वर्तते। उपमालङ्कारस्य चत्वारः अंशाः भवन्ति, ते च उपमेयम्, उपमानं, सादृश्यवाचकपदम्, सादृश्यधर्मः चेति। उपमा द्विविधा भवति पूर्णोपमा, लुप्तोपमा चेति। यत्र एते चत्वारः अंशाः एव तिष्ठन्ति सा पूर्णोपमा भवति। यत्र च एतेषां चतुर्णां मध्ये कश्चित् एकः ततोऽधिकः वा अंशः न तिष्ठति सा लुप्तोपमा भवति। अत्र उपमेयं हि भुजौ इति। उपमानं हि हस्तिहस्तौ इति। सादृश्यवाचकपदं हि उपमा इति। सादृश्यधर्मः हि शक्तिमत्त्वम् इति। सादृश्यधर्मस्य असत्त्वात् अस्मिन् श्लोके लुप्तोपमा वर्तते।



## पाठगतप्रश्नाः-

१) हनुमान् कस्य वचः विज्ञाय ऋष्यमूकपर्वतात् पुप्लुवे।

२) हनुमान् कस्मात् पर्वतात् पुप्लुवे।

३) हनुमान् कस्य पुत्रः आसीत्।

४) हनुमान् किं रूपं धृत्वा रामलक्ष्मणयोः समीपं गतवान्।



५) हनुमान् कीदृश्या वाचा रामलक्ष्मणौ प्रशशंस।

६) रामलक्ष्मणौ कान् त्रासयन्तौ तं देशं प्राप्तवन्तौ।

७) रामलक्ष्मणौ कस्याः नद्याः तीरे वृक्षान् वीक्षमाणौ आस्ताम्।

८) पम्पानदी कीदृशी आसीत्।

९) रामलक्ष्मणौ काः पीडयन्तौ आस्ताम्।

१०) रामलक्ष्मणौ कीदृशे चापे गृहीतवन्तौ।

११) रामलक्ष्मणयोः भुजौ कीदृशौ आस्ताम्।

१२) रामहनुमतोः प्रथमः संवादः रामायणस्य कस्मिन् काण्डे अस्ति।

क)किष्किन्धाकाण्डे　　ख)अरण्यकाण्डे

ग)सुन्दरकाण्डे　　घ)युद्धकाण्डे

१३) हनुमान् कस्मात् पर्वतात् रामलक्ष्णयोः समीपं गतवान्।

क)हिमालयः　　ख)विन्ध्यः

ग)ऋष्यमूकः　　घ)अयोध्या

१४)हनुमान् किं रूपं धृतवान्।

क)मनुष्यरूपम्　　ख)भिक्षुरूपम्

ग)ब्राह्मणरूपम्　　घ)राजरूपम्

१५)रामलक्ष्मणौ कस्या नद्याः तीरे उपस्थितौ आस्ताम्।

क)गङ्गा　　ख)यमुना

ग)पद्मा　　घ)पम्पा

१६) हस्तिहस्तोपमभुजौ...इत्यत्र कः अलङ्कारः वर्तते।

क)रूपकालङ्कारः　　ख)दृष्टान्तालङ्कारः

ग)उपमालङ्कारः　　घ)अनुप्रासालङ्कारः

१७)क-स्तम्भेन सह ख-स्तम्भं मेलयतु - -

| **क-स्तम्भः** | **ख-स्तम्भः** |
|---|---|
| १. पुप्लुवे | क. भाषितवान् |
| २. रामायणम् | ख. कपिः |
| ३. आबभाषे | ग. उक्तवान् |
| ४. पम्पा | घ. प्राप |
| ५. हनुमान् | ङ. जगाम |



| | |
|---|---|
| ६. भेजे | च. पर्वतः |
| ७. ऋष्यमूकः | छ. वाल्मीकिः |
| ८. उवाच | ज. शुभजला |



## पाठसारः

वनवासकाले सीतायाः अन्वेषणस्य कृते साहाय्यप्रार्थनार्थं श्रीरामः भ्रात्रा लक्ष्मणेन सह सुग्रीवस्य समीपं जिगमिषुः पम्पासरोवरस्य तीरे समुपस्थितः। ततः किञ्चित् दूरे ऋष्यमूकनामके पर्वते वानरेश्वरः सुग्रीवः भ्रातुः वालिनः भयात् गुप्ततया निवसति स्म। स सग्रीवः दूरात् धनुर्बाणादिशस्त्रयुक्तौ दीर्घबाहुसम्पन्नौ तौ तपस्विनौ वनवासिनौ दृष्टवान्। तस्मात् स चिन्तितवान् यत् - तस्य भ्राता वाली एव तस्य मारणाय तौ शस्त्रधरौ अत्र प्रेषितवान् इति। अतः स अतीव भीतः जातः। तस्य सचिवः आसीत् हनुमान्। तस्मात् पम्पासरोवरतीरे स्थितौ तौ तपस्विनौ केन कारणेन अत्र आगतवन्तौ इति ज्ञानाय सुग्रीवः सचिवाय हनुमते आदिष्टवान्। हनुमान् च राजानुसारेण स्वस्य वानररूपं विहाय भिक्षुकवेषेण तयोः समीपं गतवान्।

तत्र गत्वा स आदौ अतिथिज्ञानेन तयोः प्रणामं कृतवान्। ततः विध्यनुसारं तयोः पूजनं कृत्वा स्वस्य मधुरेण मनोहरेण च वचनेन तयोः प्रशंसां कर्तुम् आरब्धवान्। रामलक्ष्मणौ स्वस्य ब्रह्मचर्यतेजसा वनस्थान् मृगान् अन्यान् प्राणिनः च त्रासयन्तौ आस्ताम। तयोः सौन्दर्यप्रभावात् पवित्रजलविशिष्टः पम्पासरोवरः अपि शोभते स्म। सम्पूर्णं दिवसं व्याप्य तौ भ्रातरौ वनसञ्चारं कृत्वा क्लान्तौ सञ्जातौ। तयोः एतादृशं कष्टं दृष्ट्वा तु अन्ये वनवासिनः अपि दुःखिताः अभवन्। तयोः शरीरस्य कान्तिः सुवर्णवत् आसीत्, परन्तु तथा सत्त्वेऽपि तयोः परिधाने आसीत् केवलं द्वौ खण्डवस्त्रौ। इन्द्रधनुर्वत् लक्ष्यभेदि आसीत् तयोः धनुः।गजशुण्डासदृशबलयुक्तहस्तविशिष्टौ तौ रूपसम्पन्नौ रामलक्ष्मणौ सकलमनुष्येषु श्रेष्ठौ आस्ताम् इति अस्य पाठस्य सारः।



## किमधिगतम्

- गृहस्थान् प्रति भिक्षुणा प्रणामः कर्तव्यः।
- अतिथिः सदा पूजनीयः।
- ब्रह्मचर्यं यथायथं पाल्यते चेत् शरीरे महत् तेजः उत्पद्यते।
- कस्यापि परिचयः ज्ञातव्यः चेत् तेन सह मधुरवाचा वार्तालापः करणीयः।
- कस्यापि मिथ्याप्रशंसा न कर्तव्या।



## पाठान्तप्रश्नाः

१) रामलक्ष्मणाभ्यां सह हनुमतः प्रथमसाक्षात्कारविषये संक्षेपेण लिखत।

२) हनुमान् कथं भिक्षुकवेषेण रामलक्ष्मणयोः समीपं गतवान्।

३) तत्र गमनान्तरं हनुमान् किं किं कृतवान् इति सप्रसङ्गं वर्णयत।

४) रामलक्ष्मणौ केन प्रकारेण वन्याः प्रजाः पीडयतः स्म।

५) रामलक्ष्मणयोः धनुर्विषये संक्षेपेण किञ्चित् आलोचयत।

६) चक्रचापनिभे चापे.........इत्यत्र यः अलङ्कारः वर्तते, तद्विषये संक्षेपेण आलोचयत।



## उत्तरतालिका

१) सुग्रीवस्य

२) ऋष्यमूकात्

३) मारुतस्य

४) भिक्षुरूपम्

५) श्लक्ष्णया सुमनोज्ञया

६) मृगगणान् अन्यान् वनचारिणः च

७) पम्पानद्याः

८) शुभजला

९) प्रजाः

१०) चक्रचापनिभे

११) हस्तिहस्तोपमौ

१२) क)

१३) ग)

१४) ख)

१५) घ)

१६) ग)

१७) १-ङ, २-छ, ३-क, ४-ज, ५-ख, ६-घ, ७-च, ८-ग।

॥ इति द्वादशः पाठः ॥



# १३

# हनुमत्कृता रामलक्ष्मणप्रशंसा

## प्रस्तावना

त्रेतायुगस्य चन्द्रः आसीत् श्रीरामः। पुरुषोत्तमः श्रीरामः इति प्रसिद्धिः वर्तते। अनेनैव वयं श्रीरामस्य वीरत्वसौन्दर्यविषये च किञ्चित् चिन्तयितुं शक्नुमः। वयं तु इदानीं सर्वत्र रामगुणकीर्तनं कुर्मः, तेन च अस्माकं महान् आनन्दः अपि भवति। वयं साधारणाः यदि तद्गुणकीर्तनं सानन्दं कुर्मः, तर्हि महान् भक्तः हनुमान् निःस्वार्थभक्त्या स्वप्रभोः रामस्य कीदृशं गुणकीर्तनं कृतवान् इति चिन्तनेनैव अस्माकम् आनन्दः जायते। अवश्यम् एव एतत् अस्माभिः सर्वैः भारतीयैः एव ज्ञातव्यम्। अस्मिन् पाठे वयं तम् एव विषयं ज्ञास्यामः। तेन रामः कीदृशः वीरः आसीत् , तस्य कीदृशं सौन्दर्यं च आसीत् इति ज्ञात्वा आनन्दम् अनुभवामः। अस्मिन् पाठे त्रयोदश श्लोकाः वर्तन्ते।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- रामस्य सौन्दर्यविषये ज्ञातुं शक्नुयात्।
- रामः महान् वीरः आसीत् इति ज्ञास्यति।
- रामस्य सर्वाणि अस्त्राणि कीदृशानि आसन् इत्यस्मिन् विषये ज्ञानं प्राप्नुयात्।
- श्लोके स्थितानां पदानाम् अन्वयः केन प्रकारेण कर्तव्यः इति जानीयात्।
- व्याकरणविषयकं किञ्चित् ज्ञानं प्राप्नुयात्।
- श्लोकानां व्याख्या केन प्रकारेण कर्तव्या इत्यस्मिन् विषये ज्ञास्यति।
- उपमालङ्कारस्य विषये किञ्चित् ज्ञानं प्राप्स्यति।

## १३.१) मूलपाठः

**प्रभया पर्वतेन्द्रोऽसौ युवयोरवभासितः ।**
**राज्यार्हावमरप्रख्यौ कथं देशमिहागतौ ॥११॥**

**पद्मपत्रेक्षणौ वीरौ जटामण्डलधारिणौ ।**
**अन्योन्यसदृशौ वीरौ देवलोकादिहागतौ ॥१२॥**



यदृच्छयेव संप्राप्तौ चन्द्रसूर्यौ वसुंधराम् ।
विशालवक्षसौ वीरौ मानुषौ देवरूपिणौ ॥१३॥

सिंहस्कन्धौ महोत्साहौ समदौ इव गोवृषौ ।
आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः ॥१४॥

सर्वभूषणभूषार्हाः किमर्थम् न विभूषिताः ।
उभौ योग्यावहं मन्ये रक्षितुम् पृथिवीम् इमाम् ॥१५॥

ससागरवनां कृत्स्नां विन्ध्यमेरुविभूषिताम् ।
इमे च धनुषी चित्रे श्लक्ष्णे चित्रानुलेपने ॥१६॥

प्रकाशेते यथेन्द्रस्य वज्रे हेमविभूषिते ।
संपूर्णाश्च शितैर्बाणैस्तूणाश्च शुभदर्शनाः ॥१७॥

जीवितान्तकरैर्घोरैर्ज्वलद्भिरिव पन्नगैः ।
महाप्रमाणौ विपुलौ तप्तहाटकभूषणौ ॥१८॥

खड्गावेतौ विराजेते निर्मुक्तभुजगाविव ।
एवं मां परिभाषन्तं कस्माद् वै नाभिभाषतः ॥१९॥

सुग्रीवो नाम धर्मात्मा कश्चिद् वानरपुंगवः ।
वीरो विनिकृतो भ्रात्रा जगद् भ्रमति दुःखितः ॥२०॥

प्राप्तोऽहं प्रेषितस्तेन सुग्रीवेण महात्मना ।
राज्ञा वानरमुख्यानां हनुमान् नाम वानरः ॥२१॥

युवाभ्याम् स हि धर्मात्मा सुग्रीवः सख्यमिच्छति ।
तस्य मां सचिवं वित्तं वानरं पवनात्मजम् ॥२२॥

भिक्षुरूपप्रतिच्छन्नंसुग्रीवप्रियकारणात् ।
ऋष्यमूकादिह प्राप्तं कामगं कामचारिणम् ॥२३॥



## १३.२) इदानीं मूलपाठम् अवगच्छाम

**प्रभया पर्वतेन्द्रोऽसौ युवयोरवभासितः।**
**राज्यार्हावमरप्रख्यौ कथं देशमिहागतौ।।११।।**

**अन्वयः** - युवयोः प्रभया असौ पर्वतेन्द्रः अवभासितः, (तादृशौ) राज्यार्हौ अमरप्रख्यौ (युवां) इह देशं कथम् आगतौ।

**अन्वयार्थः** - युवयोः रामलक्ष्मणयोः प्रभया दीप्त्या असौ अयं पर्वतेन्द्रः गिरिराजः अवभासितः प्रकाशितः, (तादृशौ) राज्यार्हौ राज्ययोग्यौ अमरप्रख्यौ देवसदृशपराक्रमौ (युवां) इह अत्र देशं प्रदेशं कथम् केन हेतुना आगतौ समागतौ।

**सरलार्थः** - हनुमान् रामलक्ष्मणौ प्रति पृष्टवान् यत् - ययोः दीप्त्या अयम् ऋष्यमूकनामकः पर्वतराजः प्रकाशितो जातः, तादृशौ दीप्तिमन्तौ राजसिंहासनयोग्यौ देवसदृशपराक्रमविशिष्टौ युवां केन कारणेन इमं देशम् आगतवन्तौ इति।

**तात्पर्यार्थः** - रामलक्ष्मणौ वनवासं कृतवन्तौ, अतः वने यत् भोज्यं प्राप्यते स्म तदेव खादितवन्तौ तौ। तथापि तयोः एवं कान्तिः आसीत् यत्, तया कान्त्या सम्पूर्णः ऋष्यमूकपर्वतः प्रकाशितः अभवत्। तयोः दर्शनेन ज्ञायते स्म यत् तौ राजसिंहासनस्य कृते योग्यौ। किञ्च देवानां यथा पराक्रमः भवति, तथा पराक्रमः आसीत् रामलक्ष्मणयोः। परन्तु तथापि एतौ तपस्विनौ भूत्वा वने भ्रमन्ति स्म। अत एव विस्मितः हनुमान् तौ प्रति पृष्टवान् यत् - एवं कान्तियुक्तौ राजसिंहासनस्य कृते योग्यौ पराक्रमविशिष्टौ युवां राजसिंहासनं त्यक्त्वा केन कारणेन इमं दुर्गमं देशम् आगतवन्तौ इति। अर्थात् राज्यभोगः एव युवयोः उचितः, वनवासः नोचितः इति हनुमतः आशयः।

**व्याकरणविमर्शः -**

- अवभासितः - अवपूर्वकात् भास्-धातोः क्तप्रत्यये प्रथमैकवचने अवभासितः इति रूपम्।
- राज्यार्हौ - राज्याय अर्हः राज्यार्हः, तौ राज्यार्हौ इति चतुर्थीतत्पुरुषसमासः।

**सन्धिकार्यम् -**

- पर्वतेन्द्रोऽसौ = पर्वतेन्द्रः + असौ। (विसर्गसन्धिः)
- इहागतौ = इह + आगतौ। (सवर्णदीर्घसन्धिः)
- राज्यार्हावमरप्रख्यौ = राज्यार्हौ + अमरप्रख्यौ (अच्-सन्धिः)

**प्रयोगपरिवर्तनम्** - युवयोः प्रभा अमुं पर्वतेन्द्रम् अवभासितवती, (तादृशाभ्यां) राज्यार्हाभ्याम् अमरप्रख्याभ्यां (युवाभ्यां) इह देशः कथम् आगतः।

**पद्मपत्रेक्षणौ वीरौ जटामण्डलधारिणौ।**
**अन्योन्यसदृशौ वीरौ देवलोकादिहागतौ।।१२।।**



**अन्वयः** - पद्मपत्रेक्षणौ जटामण्डलधारिणौ अन्योन्यसदृशौ वीरौ देवलोकात् इह (देशं कथं) आगतौ।

**अन्वयार्थः** - पद्मपत्रेक्षणौ कमलपत्रसदृशनेत्रविशिष्टौ जटामण्डलधारिणौ जटाधारिणौ अन्योन्यसदृशौ परस्परतुल्यौ वीरौ शूरौ देवलोकात् स्वर्गलोकात् इह (देशं कथं) अत्र आगतौ समागतौ।

**सरलार्थः** - भिक्षुकवेषधारी हनुमान् रामलक्ष्मणौ पृष्टवान् यत् - कमलपत्रसदृशनेत्रविशिष्टौ जटाधारिणौ तपस्विनौ परस्परतुल्यौ महावीरौ युवां देवलोकात् इमं दुर्गमं देशं केन कारणेन प्रस्थितौ इति।

**तात्पर्यार्थः** - पद्मस्य पत्रं यथा दर्शनेन बहुरमणीयं भवति, तथा सुन्दरम् आसीत् रामलक्ष्मणयोः नेत्रद्वयम्। एवं सौन्दर्ययुक्तौ रामलक्ष्मणौ जटाधारिणौ आस्ताम्। किञ्च एतौ परस्परतुल्यौ आस्ताम्, अर्थात् लक्ष्मणः रामवत् वीरः सुन्दरश्च आसीत्, रामश्च लक्ष्मणवत् वीरः सुन्दरश्च आसीत्। तयोः दर्शनेन ज्ञायते स्म यत्, तौ स्वर्गलोकात् एव अत्र आगतवन्तौ। अत एव वानरोत्तमः हनुमान् तौ पृष्टवान् यत् - एवंविध-सौन्दर्ययुक्तौ जटाधारिणौ तापसौ युवां स्वर्गलोकं त्वक्त्वा कस्मात् कारणात् इमं दुर्गमं देशम् आगतवन्तौ इति।

**व्याकरणविमर्शः -**

- पद्मपत्रेक्षणौ - पद्मस्य पत्रं पद्मपत्रम् इति षष्ठीतत्पुरुषसमासः। पद्मपत्रम् इव ईक्षणे ययोस्तौ पद्मपत्रेक्षणौ इति उपमानपदपूर्वकबहुव्रीहिसमासः।
- जटामण्डलधारिणौ - जटायाः मण्डलं जटामण्डलम् इति षष्ठीतत्पुरुषसमासः। जटामण्डलं धरति इत्यर्थे धृधातोः इन्-प्रत्यये प्रथमाद्विवचने जटामण्डलधारिणौ इति रूपम्।
- अन्योन्यसदृशौ - अन्योन्येन सदृशौ अन्योन्यसदृशौ इति तृतीयातत्पुरुषसमासः।

**प्रयोगपरिवर्तनम्** - पद्मपत्रेक्षणाभ्यां जटामण्डलधारिभ्याम् अन्योन्यसदृशाभ्यां वीराभ्यां देवलोकात् इह (देशः कथं) आगतः।

**अलङ्कारालोचना** - श्लोकेऽस्मिन् उपमालङ्कारः वर्तते। उपमालङ्कारस्य चत्वारः अंशाः भवन्ति, ते च उपमेयम्, उपमानं, सादृश्यवाचकपदम्, सादृश्यधर्मः चेति। उपमा द्विविधा भवति पूर्णोपमा, लुप्तोपमा चेति। यत्र एते चत्वारः अंशाः एव तिष्ठन्ति सा पूर्णोपमा भवति। यत्र च एतेषां चतुर्णां मध्ये कश्चित् एकः ततोऽधिकः वा अंशः न तिष्ठति सा लुप्तोपमा भवति। अत्र उपमेयं हि ईक्षणे अर्थात् नेत्रे इति। उपमानं हि पद्मपत्रे इति। सादृश्यवाचकपदम् अत्र नास्ति। सादृश्यधर्मः हि सुन्दरत्वम् इति। अस्मिन् श्लोके सादृश्यवाचकपदस्य सादृश्यधर्मस्य च असत्त्वात् अत्र लुप्तोपमा वर्तते।

**यदृच्छयेव संप्राप्तौ चन्द्रसूर्यौ वसुंधराम्।**
**विशालवक्षसौ वीरौ मानुषौ देवरूपिणौ।।१३।।**

**अन्वयः** - यदृच्छया वसुंधरां संप्राप्तौ चन्द्रसूर्यौ इव (स्थितौ) देवरूपिणौ विशालवक्षसौ वीरौ मानुषौ (देवलोकात् इह देशं कथम् आगतौ)।



**अन्वयार्थः** - यदृच्छया स्वेच्छया वसुंधरां पृथिवीं संप्राप्तौ प्राप्तौ चन्द्रसूर्यौ इन्दुभास्करौ इव (स्थितौ) देवरूपिणौ देवतासदृशरूपसम्पन्नौ विशालवक्षसौ महावत्ससम्पन्नौ वीरौ शूरौ मानुषौ मनुष्यौ (देवलोकात् इह देशं कथम् आगतौ)।

**सरलार्थः** - चन्द्रसूर्यौ यथा स्वेच्छया रामलक्ष्मणवेषेण इमां पृथिवीम् आगत्य स्थितौ। तादृशौ मनुष्यौ देवतासदृशरूपसम्पन्नौ विशालवक्षोविशिष्टौ शूरौ तौ रामलक्ष्मणौ प्रति वानरश्रेष्ठः हनुमान् पृष्टवान् यत् - युवां देवलोकं त्यक्त्वा इमं देशं केन कारणेन आगतवन्तौ इति।

**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके महर्षिः वाल्मीकिः रामलक्ष्मणौ चन्द्रसूर्यतुल्यौ इति प्रदर्शयति। रामलक्ष्मणयोः दर्शनेन ज्ञायते स्म यत् स्वयं चन्द्रः सूर्यश्च यथा स्वेच्छया एव देवलोकं त्यक्तवन्तौ, किञ्च मनुष्यरूपेण इमां पृथिवीम् आगत्य स्थितवन्तौ इति। वीराणां वक्षःप्रदेशः यथा महान् भवति, तादृशः वक्षःप्रदेशः आसीत् अनयोः। देवतानां यथा रमणीयं रूपं भवति, यस्य दर्शनेन सर्वेषाम् आनन्दः जायते, तादृशं रमणीयं रूपम् अनयोः आसीत्। अत एव एतौ द्वौ न साधारणजनौ इति हनुमान् ज्ञातवान्। तस्मात् एव पृष्टवान् यत् - चन्द्रसूर्यतुल्यौ विशालवक्षोविशिष्टौ सुन्दरौ युवाम् स्वर्गलोकं त्यक्त्वा इमं दुर्गमं देशं केन कारणेन आगतवन्तौ इति।

**व्याकरणविमर्शः -**

- चन्द्रसूर्यौ - चन्द्रश्च सूर्यश्च चन्द्रसूर्यौ इति इतरेतरयोगद्वन्द्वसमासः।
- विशालवक्षसौ - विशालं वक्षः ययोस्तौ विशालवक्षसौ इति बहुव्रीहिसमासः।
- देवरूपिणौ - देवस्य रूपं देवरूपम् इति षष्ठीतत्पुरुषसमासः। देवरूपम् अस्यास्तीति विग्रहे देवरूपशब्दात् इन्-प्रत्यये प्रथमाद्विवचने देवरूपिणौ इति रूपम्।

**सन्धिकार्यम् -**

- यदृच्छयेव = यदृच्छया + इव। (गुण-सन्धिः)

**प्रयोगपरिवर्तनम्** - यदृच्छया वसुंधरां संप्राप्ताभ्यां चन्द्रसूर्याभ्याम् इव (स्थिताभ्यां) देवरूपिभ्यां विशालवक्षोभ्यां वीराभ्यां मानुषाभ्यां (देवलोकात् इह देशः कथम् आगतः)।

**सिंहस्कन्धौ महोत्साहौ समदाविव गोवृषौ।**
**आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः।।१४।।**

**सर्वभूषणभूषार्हाः किमर्थं न विभूषिताः।**
**उभौ योग्यावहं मन्ये रक्षितुं पृथिवीमिमाम्।।१५।।**
**ससागरवनां कृत्स्नां विन्ध्यमेरुविभूषिताम्।**

**अन्वयः** - अहं (हनुमान्) सिंहस्कन्धौ महोत्साहौ समदौ गोवृषौ इव (युवाम्) उभौ इमां ससागरवनां विन्ध्यमेरुविभूषितां कृत्स्नां पृथिवीम् रक्षितुं योग्यौ मन्ये, (अतः युवयोः) आयताः सुवृत्ताः परिघोपमाः सर्वभूषणभूषार्हाः बाहवः किमर्थं न विभूषिताः ।



**अन्वयार्थः** - अहं (हनुमान्) सिंहस्कन्धौ सिंहसदृशस्कन्धविशिष्टौ महोत्साहौ उत्साहसम्पन्नौ समदौ हृष्टौ गोवृषौ तरुणवृषभौ इव (युवाम्) उभौ द्वौ एव इमाम् एतां ससागरवनां समुद्रवनसहितां विन्ध्यमेरुविभूषितां विन्ध्यमेरुणा भूषितां कृत्स्नां समग्रां पृथिवीम् मेदिनीं रक्षितुं रक्षणाय योग्यौ अर्हौ मन्ये चिन्तयामि, (अतः युवयोः) आयताः विस्तृताः सुवृत्ताः पुष्टाः परिघोपमाः गदातुल्यौ सर्वभूषणभूषार्हाः सकलाभरणेन भूषयितुं योग्याः बाहवः भुजाः किमर्थं कस्मात् कारणात् न विभूषिताः अलङ्कृताः।

**सरलार्थः** - हनुमान् रामलक्ष्मणयोः प्रशंसां कुर्वन् पृच्छति यत् - सिंहसदृशस्कन्धविशिष्टौ तरुणवृषभवत् मदसहितौ युवाम् द्वौ एव इमां सम्पूर्णां पृथिवीं रक्षितुं योग्यौ, परन्तु युवयोः एवं विस्तृताः सुष्ठु पुष्टाः गदासदृशाः भुजाः किमर्थं अलङ्कारेण न भूषिताः इति।

**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके महर्षिः वाल्मीकिः रामलक्ष्मणयोः देशरक्षणसामर्थ्यं वर्णयति। सिंहस्य स्कन्धः यथा दृढः भीषणश्च भवति, अनयोः स्कन्धः अपि तद्वत् आसीत्। एतयोः उत्साहः अपि महान् आसीत्। मदेन सहितः तरुणः वृषभः यथा बहुसामर्थ्यवान् भवति, यत् किमपि कर्तुं शक्नोति च, तद्वत् सामर्थ्यम् अनयोः आसीत्। अत एव हनुमान् तौ प्रति उक्तवान् यत् - एवं-सामर्थ्यवन्तौ युवां सागरैः अरण्यैः च सहितायाः विन्ध्यमेरुणा भूषितायाः संपूर्णायाः पृथिव्याः रक्षां कर्तुं समर्थौ इति। रामलक्ष्मणयोः भुजाः आजानुलम्बिनः गदासदृशाः आसन्, किञ्च सर्पस्य शरीरं यथा विस्तृतं भवति तथा विस्तृताः आसन् अनयोः भुजाः। तेषु भुजेषु यः कोऽपि अलङ्कारः दीयते चेत् सः अलङ्कारः तत्र शोभते। परन्तु हनुमतः विस्मयः भवति यत् एवंभूतेषु सुन्दरेषु भुजेषु कथम् एतौ अलङ्कारं न धृतवन्तौ इति।

**व्याकरणविमर्शः -**

- सिहंस्कन्धौ - सिंहस्य स्कन्धः सिंहस्कन्धः इति षष्ठीतत्पुरुषसमासः। सिंहस्कन्धौ इव स्कन्धौ ययोस्तौ सिंहस्कन्धौ इति उपमानपदपूर्वकबहुव्रीहिसमासः।
- महोत्साहौ - महान् उत्साहः ययोः तौ महोत्साहौ इति बहुव्रीहिसमासः।
- परिघोपमाः - परिघः उपमा येषां ते परिघोपमाः इति बहुव्रीहिसमासः।
- सर्वभूषणभूषार्हाः - सर्वाणि भूषणानि सर्वभूषणानि इति इतरेतरयोगद्वन्द्वः। सर्वभूषणानां भूषा सर्वभूषणभूषा इति षष्ठीतत्पुरुषसमासः। सर्वभूषणभूषायै अर्हः सर्वभूषणभूषार्हः इति चतुर्थीतत्पुरुषसमासः।
- रक्षितुम् - रक्ष्-धातोः तुमुन्प्रत्यये रक्षितुम् इति रूपम्।
- ससागरवनाम् - सागराश्च वनानि च सागरवनानि इति इतरेतरद्वन्द्वसमासः। सागरवनैः सहिता ससागरवना, ताम् ससागरवनाम्।
- विन्ध्यमेरुविभूषिताम् - विन्ध्यः एव मेरुः विन्ध्यमेरुः इति कर्मधारयः समासः। विन्ध्यमेरुणा विभूषिता विन्ध्यमेरुविभूषिता इति तृतीयातत्पुरुषसमासः, तां विन्ध्यमेरुविभूषिताम्।

**सन्धिकार्यम् -**

- समदाविव = समदौ + इव। (अच्-सन्धिः)
- आयताश्च = आयताः + च। (विसर्गसन्धिः)



- सुवृत्ताश्च = सुवृत्ताः + च। (विसर्गसन्धिः)

**प्रयोगपरिवर्तनम्** - (मया हनुमता) सिंहस्कन्धौ महोत्साहौ समदौ गोवृषौ इव (युवाम्) उभौ इयं ससागरवना विन्ध्यमेरुविभूषिता कृत्स्ना पृथिवी रक्षितुं योग्यावहः मन्येते, (अतः युवयोः) आयतान् सुवृत्तान् परिघोपमान् सर्वभूषणभूषार्हान् बाहून् किमर्थं न विभूषितवन्तौ ।

**अलङ्कारालोचना** - अस्मिन् श्लोके उपमालङ्कारः वर्तते। उपमालङ्कारस्य चत्वारः अंशाः भवन्ति, ते च उपमेयम्, उपमानं, सादृश्यवाचकपदम्, सादृश्यधर्मः चेति। उपमा द्विविधा भवति पूर्णोपमा, लुप्तोपमा चेति। यत्र एते चत्वारः अंशाः एव तिष्ठन्ति सा पूर्णोपमा भवति। यत्र च एतेषां चतुर्णां मध्ये कश्चित् एकः ततोऽधिकः वा अंशः न तिष्ठति सा लुप्तोपमा भवति। अत्र उपमेयं हि रामलक्ष्मणौ इति। उपमानं हि समदौ गोवृषौ इति। सादृश्यवाचकपदं हि इव इति। सादृश्यधर्मः हि महोत्साहत्वम् इति। चतुर्णाम् अंशानाम् असत्त्वात् अस्मिन् श्लोके लुप्तोपमा वर्तते।

**इमे च धनुषी चित्रे श्लक्ष्णे चित्रानुलेपने।।१६।।**
**प्रकाशेते यथेन्द्रस्य वज्रे हेमविभूषिते।**

**अन्वयः** - इमे चित्रे श्लक्ष्णे चित्रानुलेपने हेमविभूषिते धनुषी इन्द्रस्य वज्रे यथा (तथा) प्रकाशेते।

**अन्वयार्थः** - इमे एते चित्रे अनेकचित्रविशिष्टे श्लक्ष्णे चिक्कणे चित्रानुलेपने द्रुतसुवर्णादिनिर्मितचित्ररूपानुलेपनविशिष्टे हेमविभूषिते सुवर्णेन अलङ्कृते धनुषी कोदण्डे इन्द्रस्य जिष्णोः वज्रे वज्रद्वयं यथा (तथा) प्रकाशेते राजेते।

**सरलार्थः** - हनुमान् रामलक्ष्मणयोः धनुषोः प्रशंसां कुर्वन् तौ प्रति उक्तवान् यत् - इन्द्रस्य वज्रं यथा अस्ति तद्वत् युवयोः एते बहुवर्णविशिष्टे चिक्कणे सुवर्णेन अलङ्कृते धनुषी स्तः इति।

**तात्पर्यार्थः** - अस्मिन् श्लोके हनुमान् रामलक्ष्मणयोः धनुषोः प्रशंसां कृतवान्। तयोः धनुषोः बहवः वर्णाः आसन्। द्रुतसुवर्णेन निर्मितं यत् चित्ररूपं, तेन चित्ररूपेण अनुलेपनं कृतम् आसीत् धनुषोः मध्ये। किञ्च स्वर्णेन सज्जिते ते धनुषी चिक्कणे आस्ताम्। अर्थात् ते धनुषी दर्शनेन अपि रमणीये आस्ताम्। इन्द्रस्य वज्रं यथा न केनापि दृश्यते, अतः तत् अद्भूतं वर्तते, तद्वत् अस्मिन् लोके एवं धनुषी साधारणतः न दृश्येते, अतः एते धनुषी अपि वज्रवत् अद्भूते आस्ताम्।

**व्याकरणविमर्शः -**

- चित्रानुलेपने - चित्रेण अनुलेपने चित्रानुलेपने इति तृतीयातत्पुरुषसमासः।
- हेमविभूषिते - हेम्ना विभूषिते हेमविभूषिते इति तृतीयातत्पुरुषसमासः।

**सन्धिकार्यम् -**

- यथेन्द्रस्य = यथा + इन्द्रस्य। (गुण-सन्धिः)

**प्रयोगपरिवर्तनम्** - आभ्यां चित्राभ्यां श्लक्ष्णाभ्यां चित्रानुलेपनाभ्यां धनुर्भ्याम् इन्द्रस्य वज्राभ्यां यथा (तथा) प्रकाश्यते।



**अलङ्कारालोचना** - श्लोकेऽस्मिन् उपमालङ्कारः वर्तते। उपमालङ्कारस्य चत्वारः अंशाः भवन्ति, ते च उपमेयम्, उपमानं, सादृश्यवाचकपदम्, सादृश्यधर्मः चेति। उपमा द्विविधा भवति पूर्णोपमा, लुप्तोपमा चेति। यत्र एते चत्वारः अंशाः एव तिष्ठन्ति सा पूर्णोपमा भवति। यत्र च एतेषां चतुर्णां मध्ये कश्चित् एकः ततोऽधिकः वा अंशः न तिष्ठति सा लुप्तोपमा भवति। अत्र उपमेयं हि धनुषी इति। उपमानं हि वज्रे इति। सादृश्यवाचकपदं हि यथा इति। सादृश्यधर्मः हि शत्रुनाशकत्वम् इति। अस्मिन् श्लोके सादृश्यधर्मस्य असत्त्वात् लुप्तोपमा वर्तते।

**संपूर्णाश्च शितैर्बाणैस्तूणाश्च शुभदर्शनाः।।१७।।**
**जीवितान्तकरैर्घोरैर्ज्वलद्भिरिव पन्नगैः।**

**अन्वयः** - शितैः जीवितान्तकरैः पन्नगैः इव घोरैः ज्वलद्भिः बाणैः तूणाः संपूर्णाः (अत एव) शुभदर्शनाः (सन्ति)।

**अन्वयार्थः** - शितैः तीक्ष्णैः जीवितान्तकरैः शत्रुजीवनविध्वंसकैः पन्नगैः सर्पैः इव घोरैः भयङ्करैः ज्वलद्भिः प्रकाशमानैः बाणैः विशिखैः तूणाः तूणिराः संपूर्णाः पूर्णाः (अत एव) शुभदर्शनाः सुदर्शनाः (सन्ति)।

**सरलार्थः** - हनुमान् रामलक्ष्मणयोः बाणानां तूणीराणां च प्रशंसां कुर्वन् तौ प्रति उक्तवान् यत् - युवयोः बाणाः अतितीक्ष्णाः सर्पवत् शत्रुनाशकाः किञ्च भयङ्कराः, तादृशैः बाणैः युवयोः तूणीराः पूर्णाः सन्ति, अत एव ते तूणीराः अपि सुदर्शनाः सन्ति इति।

**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके हनुमान् रामलक्ष्मणयोः बाणान् दृष्ट्वा विस्मितः अभवत्, अतः तेषां बाणानां प्रशंसां कृतवान् यत्, ते बाणाः अतीव तीक्ष्णाः, अर्थात् कस्यापि उपरि प्रयोगः कृतः चेत् तस्य मरणं निश्चतं भवति। शत्रुः यदि सर्पं स्पृशति तर्हि निमेषेणैव स सर्पः स्वविषेण तं शत्रुं विनाशयति। तद्वत् अनयोः बाणाः अपि निमेषेणैव शत्रुविनाशकाः आसन्। अपि च तयोः बाणाः एवं भयङ्कराः आसन् यत् तद्दर्शनमात्रम् एव शत्रोः मनसि महद् भयम् उत्पद्यते। एवंभूतैः प्रकाशमानैः बाणैः तयोः तूणीराः पूर्णाः आसन्, अतःतादृश-असाधारणबाणैः भूषिताः सन्तः तयोः तूणीराः अपि सुन्दराः दृश्यन्ते स्म।

### व्याकरणविमर्शः -

- संपूर्णाः - सम्-पूर्वकात् पूर्-धातोः क्तप्रत्यये प्रथमाबहुवचने संपूर्णाः इति रूपम्।
- शुभदर्शनाः - शुभं दर्शनं येषां ते शुभदर्शनाः इति बहुव्रीहिसमासः।
- जीवितान्तकरैः - अन्तं कुर्वन्ति इति अन्तकराः। जीवितानाम् अन्तकराः जीवितान्तकराः इति षष्ठीतत्पुरुषसमासः।
- ज्वलद्भिः - ज्वल्-धातोः शतृप्रत्यये तृतीयाबहुवचने ज्वलद्भिः इति रूपम्।

### सन्धिकार्यम् -

- संपूर्णाश्च = संपूर्णाः + च। (विसर्गसन्धिः)



- शितैर्बाणैः = शितैः + बाणैः। (विसर्गसन्धिः)
- बाणैस्तूणाः = बाणैः + तूणाः। (विसर्गसन्धिः)
- तूणाश्च = तूणाः + च। (विसर्गसन्धिः)
- जीवितान्तकरैर्घोरैः = जीवितान्तकरैः + घोरैः। (विसर्गसन्धिः)
- घोरैर्ज्वलद्भिः = घोरैः + ज्वलद्भिः। (विसर्गसन्धिः)
- ज्वलद्भिरिव = ज्वलद्भिः + इव। (विसर्गसन्धिः)

**प्रयोगपरिवर्तनम्** - शितैः जीवितान्तकरैः पन्नगैः इव घोरैः ज्वलद्भिः बाणैः तूणैः संपूर्णैः (अत एव) शुभदर्शनैः (भूयन्ते)।

**अलङ्कारालोचना** - अस्मिन् श्लोके उपमालङ्कारः वर्तते। उपमालङ्कारस्य चत्वारः अंशाः भवन्ति। ते यथा उपमेयम्, उपमानं, सादृश्यवाचकपदं, सादृश्यधर्मः चेति। उपमा द्विविधा भवति पूर्णोपमा, लुप्तोपमा चेति। यत्र एते चत्वारः अंशाः एव तिष्ठन्ति सा पूर्णोपमा भवति। यत्र च एतेषां चतुर्णां मध्ये कश्चित् एकः ततोऽधिकः वा अंशः न तिष्ठति सा लुप्तोपमा भवति। अत्र उपमेयं तावत् बाणाः इति। उपमानं हि पन्नगाः इति। सादृश्यवाचकपदं हि इव इति। सादृश्यधर्मः जीवितान्तकरत्वम् अर्थात् शत्रुजीवननाशकत्वम् इति। अस्मिन् श्लोके चतुर्णाम् अंशानाम् एव सत्त्वात् पूर्णोपमा वर्तते।

**महाप्रमाणौ विपुलौ तप्तहाटकभूषणौ।।१८**
**खड्गावेतौ विराजेते निर्मुक्तभुजगाविव।**

**अन्वयः** - महाप्रमाणौ विपुलौ तप्तहाटकभूषणौ एतौ खड्गौ निर्मुक्तभुजगौ इव विराजेते।

**अन्वयार्थः** - महाप्रमाणौ अतिप्रमाणविशिष्टौ विपुलौ पुष्टौ तप्तहाटकभूषणौ द्रुतसुवर्णलिखितौ एतौ इमौ खड्गौ तूण्यौ निर्मुक्तभुजगौ त्यक्तकञ्चुकसर्पौ इव विराजेते शोभेते।

**सरलार्थः** - हनुमान् रामलक्ष्मणयोः खड्गयोः प्रशंसां कुर्वन् तौ प्रति उक्तवान् यत् - युवयोः खड्गौ अतिदीर्घौ, किञ्च तत्र द्रुतकनकेन अङ्कितं वर्तते स्म। अपि च कञ्चुकं त्यक्तवन्तौ सर्पौ इव तौ खड्गौ आस्ताम् इति।

**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके महर्षिः वाल्मीकिः हनुमन्मुखेन रामलक्ष्मणयोः खड्गयोः वर्णनां करोति। तयोः खड्गौ अतिदीर्घौ आस्ताम्। अपि च तौ एवं पुष्टौ आस्ताम्, यत् ताभ्यां शत्रूणां विनाशनं कर्तुं शक्यम् आसीत्। द्रुतसुवर्णेन तत्र खड्गयोः मध्ये अङ्कितम् आसीत्। अतः तौ खड्गौ दर्शनेन अपि अतीव रमणीयौ आस्ताम्। सर्पः यदा कञ्चुकं त्यजति ततः परं स सर्पः पूर्वात् अपि अधिकः चिक्कणः भवति, तद्वत् चिक्कणौ आस्ताम् एतयोः खड्गौ।

**व्याकरणविमर्शः -**

- महाप्रमाणौ - महत् प्रमाणं ययोः तौ महाप्रमाणौ इति बहुव्रीहिसमासः।
- तप्तहाटकभूषणौ - तप्तं च तत् हाटकं तप्तहाटकम् इति कर्मधारयसमासः। तप्तहाटकं भूषणं ययोः तौ तप्तहाटकभूषणौ इति बहुव्रीहिसमासः।



- निर्मुक्तभुजगौ - निर्मुक्तौ च तौ भुजगौ निर्मुक्तभुजगौ इति कर्मधारयसमासः।

**सन्धिकार्यम् -**

- खड्गावेतौ = खड्गौ + एतौ। (अच्-सन्धिः)
- निर्मुक्तभुजगाविव = निर्मुक्तभुजगौ + इव।

**प्रयोगपरिवर्तनम्** - महाप्रमाणाभ्यां विपुलाभ्यां तप्तहाटकभूषणाभ्याम् एताभ्यां खड्गाभ्यां निर्मुक्तभुजगाभ्याम् इव विराज्यते।

**अलङ्कारालोचना** - अयं श्लोकः उपमालङ्कारसमन्वितः वर्तते। उपमालङ्कारस्य चत्वारः अंशाः भवन्ति, ते च उपमेयम्, उपमानं, सादृश्यवाचकपदम्, सादृश्यधर्मः चेति। उपमा द्विविधा भवति पूर्णोपमा, लुप्तोपमा चेति। यत्र एते चत्वारः अंशाः एव तिष्ठन्ति सा पूर्णोपमा भवति। यत्र च एतेषां चतुर्णां मध्ये कश्चित् एकः ततोऽधिकः वा अंशः न तिष्ठति सा लुप्तोपमा भवति। अत्र उपमेयवाचकपदं हि खड्गौ इति। उपमानं हि निर्मुक्तभुजगौ इति। सादृश्यवाचकपदं हि इव इति। सादृश्यधर्मः हि चिक्कणत्वं इति। अस्मिन् श्लोके चतुर्णाम् अंशानां मध्ये सादृश्यधर्मस्य असत्त्वात् लुप्तोपमा वर्तते।

**एवं मां परिभाषन्तं कस्माद्वै नाभिभाषतः।।१९**

**अन्वयः** - एवं परिभाषन्तं मां कस्मात् वै (युवां) न अभिभाषतः।

**अन्वयार्थः** - एवम् अनेन प्रकारेण परिभाषन्तं कथयन्तं मां हनुमन्तं कस्मात् कस्मात् हेतोः वै (भवन्तौ) न अभिभाषतः भाषेते।

**सरलार्थः** - एवं रामलक्ष्मणयोः प्रशंसायाः परं हनुमान् किञ्चित् विस्मितः भूत्वा तौ पृष्टवान् यत् - अहम् एतावत्कालपर्यन्तं बहु किमपि उक्तवान्, परन्तु युवां कथं मां प्रति किमपि न वदथः इति।

**तात्पर्यार्थः** - हनुमान् एतावत्कालपर्यन्तं रामलक्ष्मणयोः वीरत्वस्य, सौन्दर्यस्य, तयोः भुजानां, धनुषोः, बाणानां खड्गयोश्च बहुप्रशंसां कृतवान्, परन्तु तौ रामलक्ष्मणौ एतत् सर्वं श्रुत्वा अपि मौनेन एव स्थितवन्तौ, न किमपि उक्तवन्तौ। अत एव हनुमान् किञ्चित् विस्मितः भूत्वा तौ प्रति उक्तवन्तौ यत् - अहम् एतावत्कालपर्यन्तं बहु किमपि उक्तवन्तौ, परन्तु युवां कथं मा प्रति किमपि न वदथः इति।

**व्याकरणविमर्शः -**

- परिभाषन्तम् - परिपूर्वकात् भाष्-धातोः शतृप्रत्यये द्वितीयैकवचने परिभाषन्तम् इति रूपम्। अत्र भाष्-धातोः परस्मैपदप्रयोगः आर्षः।

**सन्धिकार्यम् -**

- कस्माद्वै = कस्मात् + वै। (जश्त्व-सन्धिः)
- नाभिभाषतः= न + अभिभाषतः। (सवर्णदीर्घसन्धिः)

**प्रयोगपरिवर्तनम्** - एवं परिभाषन् अहं कस्मात् वै (युवाभ्यां) न अभिभाष्ये।



**सुग्रीवो नाम धर्मात्मा कश्चिद् वानरपुङ्गवः**
**वीरो विनिकृतो भ्रात्रा जगद् भ्रमति दुःखितः।।२०।।**

**अन्वयः** - सुग्रीवः नाम कश्चित् वानरपुङ्गवः वीरः धर्मात्मा भ्रात्रा विनिकृतः दुःखितः जगत् भ्रमति।

**अन्वयार्थः** - सुग्रीवः नाम सुग्रीवनामधेयः कश्चित् कश्चन वानरपुङ्गवः कपिश्रेष्ठः वीरः शूरः धर्मात्मा धार्मिकः भ्रात्रा सहोदरेण विनिकृतः वञ्चितः दुःखितः व्यथितः जगत् विश्वं भ्रमति सञ्चरति।

**सरलार्थः** - हनुमान् सुग्रीवविषये रामलक्ष्मणौ प्रति उक्तवान् यत् - सुग्रीवो हि महाधार्मिकः कश्चन वानरेषु श्रेष्ठः, महावीरः स्वभ्रात्रा वञ्चितो भूत्वा दुःखितः सन् विश्वं भ्रमति इति।

**तात्पर्यार्थः** - सुग्रीवेण प्रेषितः हनुमान् रामलक्ष्मणयोः समीपं गतवान्, तत्र च तयोः वीरत्वसौन्दर्यादिकं दृष्ट्वा ज्ञातवान् यत्, एतौ न साधारणजनौ इति। अतः एव तौ वालिना न प्रेषितौ इति निश्चयः अभवत् तस्य। तस्मात् स्वस्य राज्ञः सुग्रीवस्य स्तुतिपूर्वकं तस्य विषये उक्तवान् यत् - सुग्रीवः हि वानरेषु श्रेष्ठः कश्चन महावीरः वानरः वर्तते। स हि एकः महान् धार्मिकः। परन्तु तस्य भ्राता वाली केनचित् कारणेन तं वञ्चितवान्। स वाली अधुना तं मारयितुं प्रयत्नं करोति। अतः सुग्रीवः इदानीं दुःखितः सन् भ्रातुः भयात् समग्रं विश्वं भ्रमति इति।

**व्याकरणविमर्शः** -

- वानरपुङ्गवः - वानरेषु पुङ्गवः वानरपुङ्गवः इति सप्तमीतत्पुरुषसमासः।
- विनिकृतः - विपूर्वकात् निपूर्वकात् च कृधातोः क्तप्रत्यये प्रथमैकवचने विनिकृतः इति रूपम्।

**सन्धिकार्यम् -**

- सुग्रीवो नाम = सुग्रीवः + नाम। (विसर्गसन्धिः)
- कश्चिद्वानरपुङ्गवः = कश्चित् + वानरपुङ्गवः। (जश्त्वसन्धिः)
- जगद्भ्रमति = जगत् + भ्रमति। (जश्त्वसन्धिः)

**प्रयोगपरिवर्तनम्** - सुग्रीवेण नाम्ना केनचित् वानरपुङ्गवेन वीरेण धर्मात्मना भ्रात्रा विनिकृतेन दुःखितेन जगत् भ्रम्यते।

**प्राप्तोऽहं प्रेषितस्तेन सुग्रीवेण महात्मना।**
**राज्ञा वानरमुख्यानां हनुमान्नाम वानरः।।२१।।**

**अन्वयः** - तेन वानरमुख्यानां राज्ञा महात्मना सुग्रीवेण प्रेषितः अहं हनुमान् नाम वानरः (त्वां) प्राप्तः (अस्मि)।

**अन्वयार्थः** - अहं तेन वानरमुख्यानां कपीनां राज्ञा नृपेण महात्मना महाबुद्धिना सुग्रीवेण सुग्रीवनामकेन प्रेषितः प्रेरितः हनुमान् नाम हनुमान्नामधेयः वानरः मर्कटः (त्वां) प्राप्तः संप्राप्तः (अस्मि)।



**सरलार्थः** - रामलक्ष्मणयोः स्वरूपं ज्ञात्वा हनुमान् स्वविषये तौ प्रति उक्तवान् यत् - मम नाम हनुमान्, वानरराजः महात्मा सुग्रीवः माम् अत्र प्रेषितवान्, अतः अहं युवयोः समीपम् आगतः इति।

**तात्पर्यार्थः** - पूर्वश्लोके हनुमान् स्वस्य राज्ञः सुग्रीवस्य विषये उक्तवान्। अतः प्रस्तुतेऽस्मिन् श्लोके हनुमान् रामलक्ष्मणौ प्रति स्वस्य परिचयं वक्तुम् आरब्धवान्। हनुमान् सविनयं नम्रो भूत्वा तौ उक्तवान् यत् - मम नाम हनुमान्, अहम् एकः वानरः अस्मि। वानरराजस्य महात्मनः सुग्रीवस्य आदेशानुसारम् अहं युवयोः समीपम् आगतवान् इति।

**व्याकरणविमर्शः** -

- महात्मना - महान् आत्मा यस्य स महात्मा इति बहुव्रीहिसमासः।
- वानरमुख्यानाम् - वानरेषु मुख्याः वानरमुख्याः इति षष्ठीतत्पुरुषसमास, तेषां वानरमुख्यानाम्।

**सन्धिकार्यम् -**

- प्राप्तोऽहम् = प्राप्तः + अहम्। (विसर्गसन्धिः)
- प्रेषितस्तेन = प्रेषितः + तेन। (विसर्गसन्धिः)
- **प्रयोगपरिवर्तनम्** - मया तेन वानरमुख्यानां राज्ञा महात्मना सुग्रीवेण प्रेषितेन हनुमता नाम वानरेण (त्वां) प्राप्तेन (भूयते)।

**युवाभ्यां स हि धर्मात्मा सुग्रीवः सख्यमिच्छति।**

**अन्वयः** - स हि धर्मात्मा सुग्रीवः युवाभ्यां (सह) सख्यम् इच्छति।

**अन्वयार्थः** - स हि धर्मात्मा धर्मपरायणः सुग्रीवः सुग्रीवनामकः राजा युवाभ्यां भवद्भ्यां (सह) सख्यं मैत्र्यम् इच्छति काङ्क्षति।

**सरलार्थः** - वानरराजः सुग्रीवः हनुमन्तं कथं रामलक्ष्मणयोः समीपं प्रेषितवान् इति प्रश्ने हनुमान् उक्तवान् यत् - सुग्रीवः युवयोः मित्रं भवितुम् इच्छति इति।

**तात्पर्यार्थः** - हनुमतः परिचयज्ञानात् अनन्तरं, सुग्रीवः हनुमन्तम् अत्र प्रेषितवान् इति ज्ञातवान् श्रीरामः। अतः एव सुग्रीवेण हनुमतः अत्र प्रेषणस्य कारणं ज्ञातुम् इष्टवान् सः। तस्मात् हनुमान् तत् वक्तुम् आरभते स्म। हनुमान् उक्तवान् यत् - वानरराजः सुग्रीवः रामलक्ष्मणाभ्यां सह मैत्रीं स्थापयितुम् इच्छति। अतः स युवयोः परिचयं ज्ञातुम् अत्र मां प्रेषितवान् इति।

**व्याकरणविमर्शः** -

- सख्यम् - सखिशब्दात् ष्यञ्प्रत्यये द्वितीयैकवचने सख्यम् इति रूपम्।

**सन्धिकार्यम् -**

- स हि = सः + हि। (विसर्गसन्धिः)

**प्रयोगपरिवर्तनम्** - तेन हि धर्मात्मना सुग्रीवेण युवाभ्यां (सह) सख्यम् इष्यते।



**तस्य मां सचिवं वित्तं वानरं पवनात्मजम्।।२२।।**
**भिक्षुरूपप्रतिच्छन्नं सुग्रीवप्रियकारणात्।**
**ऋष्यमूकादिह प्राप्तं कामगं कामचारिणम्।।२३।।**

**अन्वयः -** भिक्षुरूपप्रतिच्छन्नं सुग्रीवप्रियकारणात् ऋष्यमूकात् इह प्राप्तं कामगं कामचारिणं तस्य सचिवं पवनात्मजं वानरं मां वित्तम्।

**अन्वयार्थः -** भिक्षुरूपप्रतिच्छन्नं भिक्षुकवेषेण आच्छन्नं सुग्रीवप्रियकारणात् सुग्रीवस्य प्रियं कर्तुम् ऋष्यमूकात् ऋष्यमूकनामकात् पर्वतात् इह अत्र प्राप्तं संप्राप्तं कामगं यथेच्छं गमनकर्तारं कामचारिणं कामरूपिणं तस्य सुग्रीवस्य सचिवं चरं पवनात्मजं मारुतपुत्रं वानरं कपिं मां हनुमन्तं वित्तं जानीतम्।

**सरलार्थः -** हनुमान् रामलक्ष्मणौ प्रति स्वविषये उक्तवान् यत् - अहं वायोः पुत्रः हनुमान् वानरराजस्य सुग्रीवस्य सचिवःअस्मि। युवयोः परिचयज्ञानं सम्प्रति तस्य इष्टं कर्म, अतः तद् कर्तुम् अहं भिक्षुकवेषेण ऋष्यमूकपर्वतात् अत्र आगतवान्। अहम् इच्छानुसारं सर्वत्र गन्तुं शक्नोमि।. किञ्च यत् किमपि रूपं धर्तुं शक्नोमि इति।

**तात्पर्यार्थः -** वानरराजः सुग्रीवः रामलक्ष्मणाभ्यां सह मैत्रीं स्थापयितुम् इच्छति, अतः स हनुमन्तम् अत्र प्रेषितवान् इति हनुमन्मुखात् ज्ञातवान् श्रीरामः। परन्तु तेन सुग्रीवेण सह हनुमतः कः सम्बन्धः अस्ति, इति प्रश्ने हनुमान् तौ प्रति उक्तवान् यत् - अहं वायोः पुत्रः हनुमान् तस्य वानरराजस्य सुग्रीवस्य सचिवः अस्मि। युवयोः परिचयविषयकं ज्ञानं वानरराजस्य सुग्रीवस्य सम्प्रति इष्टं कार्यं वर्तते, अतः अहं युवयोः परिचयं ज्ञातुं भिक्षुकवेषं धृत्वा ऋष्यमूकपर्वतात् युवयोः समीपम् आगतवान्। अहम् इच्छानुसारं यत्र कुत्रापि गन्तुं शक्नोमि, किञ्च इच्छानुसारं यत् किमपि रूपं धर्तुं शक्नोमि इति। वस्तुतः प्रस्तुतेऽस्मिन् श्लोके महर्षिः वाल्मीकिः हनुमतः साधारणेभ्यः अधिकं सामर्थ्यं वर्णयति।

**व्याकरणविमर्शः -**

- वित्तम् - विद्-धातोः लोट्लकारे मध्यमपुरुषद्विवचने वित्तम् इति रूपम्।
- पवनात्मजम् - पवनस्य आत्मजः पवनात्मजः इति षष्ठीतत्पुरुषसमासः , तं पवनात्मजम्।
- भिक्षुरूपप्रतिच्छन्नम् - भिक्षुरूपेण प्रतिच्छन्नः भिक्षुरूपप्रतिच्छन्नः इति तृतीयातत्पुरुषसमासः, तं भिक्षुरूपप्रतिच्छन्नम्।
- सुग्रीवप्रियकारणात् - सुग्रीवस्य प्रियं सुग्रीवप्रियम् इति षष्ठीतत्पुरुषसमासः। सुग्रीवप्रियमेव कारणम् सुग्रीवप्रियकारणम् इति कर्मधारयसमासः।
- कामचारिणम् - कामं चरति इति कामचारी, तं कामचारिणम्।

**सन्धिकार्यम् -**

- ऋष्यमूकादिह = ऋष्यमूकात् + इह। (जश्त्व-सन्धिः)

**प्रयोगपरिवर्तनम् -** भिक्षुरूपप्रतिच्छन्नः सुग्रीवप्रियकारणात् ऋष्यमूकात् इह प्राप्तः कामगः कामचारी तस्य सचिवः पवनात्मजः वानरः अहं विद्यै।





## पाठगतप्रश्नाः

१) कया पर्वतेन्द्रः अवभासितः।

२) रामलक्ष्मणयोः नेत्रे कीदृशे आस्ताम्।

३) रामलक्ष्मणौ कस्मात् लोकात् इह आगतवन्तौ।

४) चन्द्रसूर्यौ कुत्र संप्राप्तौ।

५) रामलक्ष्मणौ कौ इव महोत्साहौ आस्ताम्।

६) रामलक्ष्मणयोः भुजाः कीदृशाः आसन्।

७) रामलक्ष्मणौ कां रक्षितुं योग्यौ आस्ताम्।

८) तयोः धनुषी कीदृशे आस्ताम्।

९) तयोः धनुषी के इव प्रकाशेते।

१०) तयोः तूणाः कैः संपूर्णाः।

११) तयोः खड्गौ कौ इव आस्ताम्।

१२) सुग्रीवः केन विनिकृतः।

१३) सुग्रीवः किम् इच्छति।

१४) हनुमान् कीदृशः आसीत्।

१५) पद्मपत्रेक्षणौ... इत्यत्र कः अलङ्कारः विद्यते।

क) दृष्टान्तालङ्कारः    ख) उपमालङ्कारः

ग) रूपकालङ्कारः    घ) उत्प्रेक्षालङ्कारः

१६) "राज्यार्हावमरप्रख्यौ कथं देशमिहागतौ"-इति कस्य उक्तिः।

क) सुग्रीवस्य    ख) हनुमतः

ग) रामस्य    घ) लक्ष्मणस्य

१७) विन्ध्यमेरुविभूषिता इति कस्य विशेषणम्।

क) पम्पानन्द्याः    ख) सीतायाः

ग) पृथिव्याः    घ) लङ्कायाः

१८) बाणाः कैः उपमिताः।

क) पन्नगैः    ख) वज्रैः

ग) निर्मुक्तभुजगैः    घ) गजशुण्डैः

१९) हनुमान् कस्य सचिवः।



क)रामस्य ख)वायोः

ग)वालिनः घ)सुग्रीवस्य

२०) क-स्तम्भेन सह ख-स्तम्भं मेलयतु - -

| **क-स्तम्भः** | **ख-स्तम्भः** |
|---|---|
| १.मन्ये | क. सञ्चरति |
| २. पद्मपत्रे | ख. बाहवः |
| ३.चन्द्रसूर्यौ | ग. गोवृषौ |
| ४. प्रकाशेते | घ. ईक्षणे |
| ५. समदौ | ङ. सुग्रीवः |
| ६. विराजेते | च. राजेते |
| ७. सर्वभूषणभूषार्हाः | छ. जानीतम् |
| ८. भ्रमति | ज. चिन्तयामि |
| ९. दुःखितः | झ. शोभेते |
| १०. वित्तम् | ञ. रामलक्ष्मणौ |



## पाठसारः

सुग्रीवादेशानुसारं हनुमान् स्ववानररूपम् आच्छाद्य भिक्षुकवेषेण पम्पासरोवरतीरे स्थितयोः रामलक्ष्मणयोः समीपम् उपस्थितः। तत्र गत्वा स स्वस्य मनोहरवचसा तयोः प्रशंसां कर्तुम् आरब्धवान्। सुन्दरयोः तयोः श्रिया ऋष्यमूकनामकः पर्वतेन्द्रः प्रकाशितो जातः। राजसिंहासनाय अर्हौ तौ कथं तपस्विवेषेण इमं दुर्गमं देशम् आगतवन्तौ इति आसीत् हनुमतः पृच्छा। जटाधारिणोः तयोः लोचने कमलपत्रे इव आस्ताम्। तयोः दर्शनेन ज्ञायते यत् यथा चन्द्रसूर्यौ एव स्वेच्छया मनुष्यरूपेण इमां वसुन्धराम् आगतौ इति। पशुराजसिंहात् अपि अधिकबलवन्तौ तरुणवृषभौ इव महोत्साहौ तौ सागरवनसहितां विन्ध्यमेरुणा विभूषिताम् इमां सम्पूर्णां पृथिवीं रक्षितुं योग्यौ इति हनुमतः निश्चयः आसीत्। परन्तु सः विस्मयः अभवत् यत् रामलक्ष्मणयोः भुजाः अतीव विस्तृताः गदासदृशदृढाः आसन्। येन केनचित् अलङ्कारेण अलङ्कृताः क्रियन्ते चेत् ते भुजाः शोभन्ते स्म। परन्तु तथापि एवं सुन्दरेषु भुजेषु तौ न कमपि अलङ्कारं धृतवन्तौ इति।

इन्द्रस्य वज्रेण सदृशे तयोः धनुषी द्रुतसुवर्णेन अङ्किते आस्ताम्। सर्पैः इव शत्रुप्राणविनाशकैः भयङ्करैः प्रकाशमानैः बाणैः तयोः तूणाः सम्पूर्णाः आसन्, अत एव ते तूणाः अपि तादृशबाणैः विभूषिताः सन्तः सुदर्शनाः सञ्जाताः। एवंप्रकारेण हनुमान् रामलक्ष्मणयोः बहुप्रशंसां कृतवान्। परन्तु तौ द्वौ किमपि अनुक्त्वा तूष्णीम् एव आस्ताम्। तस्मात् हनुमान् तत्कारणं पृष्ट्वा राज्ञः सुग्रीवस्य विषये वक्तुम्



आरब्धवान्। ततः स सुग्रीवसचिवत्वेन स्वपरिचयं प्रदाय सुग्रीवः एव ताभ्यां सह सख्यम् इच्छन् तम् अत्र प्रेषितवान् इति अवदत्। एतत् सर्वम् उक्त्वा स पुनः तौ किमपि न अभाषत।



## किमधिगतम्

- द्युतिमतः द्युत्या तत्संसर्गस्थं वस्तु अपि द्युतिमत्त्वं प्राप्नोति।
- प्रशंसार्हस्य यथावत् प्रशंसा करणीया।
- राज्यसिंहासनायोग्येन राज्यभारः अवश्यं वोढव्यः।
- स्वपरिचयात् पूर्वम् आदौ स्वराज्ञः परिचयः प्रदेयः।
- स्वराज्ञः प्रशंसा सर्वत्र कर्तव्या।



## पाठान्तप्रश्नाः

१. रामलक्ष्णयोः भुजानां विषये हनुमतः उक्तिं सप्रसङ्गम् आलोचयत।

२. रामलक्ष्णयोः शस्त्राणि यथाग्रन्थं वर्णयत।

३. रामलक्ष्णयोः बाणाः कीदृशाः आसन् इति यथाग्रन्थम् आलोचयत।

४. संपूर्णाश्च शितैर्बाणैः........इत्यत्र यः अलङ्कारः वर्तते तद्विषये संक्षेपेण लिखत।

५. हनुमान् सुग्रीवविषये स्वविषये च तयोः समीपे किम् उक्तवान् इति सप्रसङ्गं लिखत।

६. हनुमतः किं किं सामर्थ्यम् आसीत्।



## उत्तरतालिका

१) रामलक्ष्मणयोः प्रभया

२) पद्मपत्रे इव

३) देवलोकात्

४) वसुन्धराम्

५) समदौ गोवृषौ इव

६) आयताः सुवृत्ताः सर्वभूषणभूषार्हाः च

७) ससागरवनां विन्ध्यमेरुविभूषितां पृथिवीम्

८) चित्रे श्लक्ष्णे चित्रानुलेपने च

९) इन्द्रस्य वज्रे इव



१०) पन्नगैः इव जीवितान्तकरैः घोरैः शितैः बाणैः

११) निर्मुक्तभुजगौ इव

१२) भ्रात्रा

१३) रामलक्ष्मणाभ्यां सह सख्यम्

१४)कामगः कामचारी च

१५) ख)

१६) ख)

१७)ग)

१८) क)

१९) घ)

२०) १-ज, २-घ, ३-ञ, ४-च, ५-ग, ६-झ, ७. ख, ८. क, ९. ङ, १०. छ।

॥इति त्रयोदशः पाठः॥



# १४

# रामकृता हनुमत्प्रशंसा

## प्रस्तावना

ऐन्द्रादीनि नव व्याकरणानि वर्तन्ते इति प्रसिद्धिः अस्ति। हनुमान् तु तानि सर्वाणि एव व्याकरणानि जानाति स्म। "सोऽयं नवव्याकरणार्थवेत्ता" इति वाल्मीकिवचनं तत्र प्रमाणम् आवहति। व्याकरणं विहाय अपि शिक्षादीनि नानाशास्त्राणि तेन ज्ञातानि। ज्ञानस्य अनन्तः पारावारः आसीत् हनुमान्। स्वयं सर्वज्ञः भगवान् श्रीरामः अस्मिन् विषये तं प्रशस्तवान्। तस्य वाक् एवं मधुरा आसीत् यत् स तया मनोहरवाचा परमानन्दं श्रीराममपि आनन्दितवान्। हनुमान् आसीत् वानरराजस्य सुग्रीवस्य दूतः, एवम्भूतः दूतः कस्यापि राज्ञः भवति चेत् स राजा अवश्यमेव सिद्धिं गच्छेत् इति भाषितवान् श्रीरामः। अस्मिन् पाठे वयं हनुमतः तादृशज्ञानविषये ज्ञात्वा आनन्दम् अनुभवामः। भगवान् श्रीरामः प्रथमसाक्षात्कारे एव स्वभक्तस्य एवं ज्ञानं वर्तते इति ज्ञात्वा किदृशीं प्रशंसां कृतवान् इति जानीमो वयं पाठस्यास्य पठनेन। पाठेऽस्मिन् द्वादश श्लोकाः विद्यन्ते।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- हनुमान् ज्ञानस्य महासागरः आसीत् इति अवगच्छेत्।
- हनुमान् चतुर्वेदज्ञः इति जानीयात्।
- वार्तालापसमये वाक्यप्रयोगः केन प्रकारेण कर्तव्यः इति विषये बोधं प्राप्स्यति।
- राज्ञः दूतः कथं भवेत् इति अवगमिष्यति।
- श्लोके स्थितानां पदानाम् अन्वयः केन प्रकारेण कर्तव्यः इति जानीयात्।
- श्लोकानां व्याख्या केन प्रकारेण कर्तव्या इत्यस्मिन् विषये ज्ञास्यति।
- व्याकरणविषयकं किञ्चित् ज्ञानं प्राप्नुयात्।



## १४.१) मूलपाठः

एवमुक्त्वा तु हनुमांस्तौ वीरौ रामलक्ष्मणौ ।
वाक्यज्ञो वाक्यकुशलः पुनर्नोवाच किंचन ॥२४॥

एतच्छ्रुत्वा वचस्तस्य **रामो लक्ष्मणम् अब्रवीत्** ।
प्रहृष्टवदनः श्रीमान् भ्रातरं पार्श्वतः स्थितम् ॥२५॥

सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः ।
तमेव काङ्क्षमाणस्य ममान्तिकमिहागतः ॥२६॥

तमभ्यभाष सौमित्रे सुग्रीवसचिवं कपिम् ।
वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्तम् अरिन्दमम् ॥२७॥

नानृग्वेदविनीतस्य नायजुर्वेदधारिणः ।
नासामवेदविदुषः शक्यम् एवं विभाषितुम् ॥२८॥

**नूनं व्याकरणं कृत्स्नम् अनेन बहुधा श्रुतम्** ।
बहु व्याहरतानेन न किंचिद् अपशब्दितम् ॥२९॥

न मुखे नेत्रयोश्चापि ललाटे च भ्रुवोस्तथा।
अन्येष्वपि च सर्वेषु दोषः संविदितः क्वचित् ॥३०॥

अविस्तरमसंदिग्धम् अविलम्बितम् अव्यथम् ।
उरःस्थं कण्ठगं वाक्यं वर्तते मध्यमस्वरम् ॥३१॥

संस्कारक्रमसंपन्नाम् अद्भुताम् अविलम्बिताम् ।
उच्चारयति कल्याणीं वाचं हृदयहर्षिणीम् ॥३२॥

अनया चित्रया वाचा त्रिस्थानव्यंजनस्थया।
कस्य नाराध्यते चित्तम् उद्यतासेररेरपि ॥३३॥

एवंविधो यस्य दूतो न भवेत् पार्थिवस्य तु ।
सिद्ध्यन्ति हि कथं तस्य कार्याणां गतयोऽनघ ॥३४॥

एवंगुणगणैर्युक्ता यस्य स्युः कार्यसाधकाः ।
तस्य सिद्ध्यन्ति सर्वेऽर्था दूतवाक्यप्रचोदिताः ॥३५॥



## १४.२) इदानीं मूलपाठम् अवगच्छाम

**एवमुक्त्वा तु हनुमांस्तौ वीरौ रामलक्ष्मणौ।**
**वाक्यज्ञो वाक्यकुशलः पुनर्नोवाच किंचन।।२४।।**

**अन्वयः** - वाक्यज्ञः वाक्यकुशलः हनुमान् तौ एवम् उक्त्वा तु पुनः किञ्चन न उवाच।

**अन्वयार्थः** - वाक्यज्ञः वाक्यतात्पर्यज्ञाता वाक्यकुशलः वाक्यप्रयोगे निपुणः हनुमान् तौ रामलक्ष्मणौ एवम् इत्थम् उक्त्वा कथयित्वा तु पुनः किञ्चन किञ्चित् न उवाच उक्तवान्।

**सरलार्थः** - वाक्यप्रयोगे कुशलः हनुमान् रामलक्ष्मणौ प्रति एवं सर्वम् उक्त्वा पुनः न किञ्चित् उक्तवान्, तूष्णीम् एव स्थितवान्।

**तात्पर्यार्थः** - अस्मिन् श्लोके महर्षिः वाल्मीकिः हनुमतः वाक्कुशलत्वं वर्णयति। हनुमान् रामलक्ष्मणयोः समीपम् आगत्य तयोः रूपस्य वीरत्वस्य प्रशंसां कृतवान्, किञ्च तयोः धनुषः बाणानां खड्गयोः अपि बहु प्रशंसां कृतवान्। अपि च ततः परं स स्वविषये स्वराज्ञः सुग्रीवस्य च विषये तौ प्रति उक्तवान्। सुग्रीवेण तस्य अत्र प्रेषणस्य कारणमपि स उक्तवान्। स एतावत्कालपर्यन्तम् एवं सर्वम् उक्त्वा सम्प्रति तूष्णीं स्थितवान्। येन रूपेण वाक्यविन्यासेन स तेषां विषयाणां प्रशंसां कृतवान्, तेन हनुमान् महान् वाक्यज्ञः, वाक्यप्रयोगे निपुणः च आसीत् इति ज्ञायते। तत् सर्वम् उक्त्वा स तूष्णीं स्थितवान्, पुनः न किमपि उक्तवान्।

**व्याकरणविमर्शः** -

- उक्त्वा - वच्-धातोः क्त्वाप्रत्यये उक्त्वा इति रूपम्।
- वाक्यज्ञः - वाक्यं जानाति इत्यर्थे ज्ञाधातोः कप्रत्यये वाक्यज्ञः इति रूपम्।
- वाक्यकुशलः - वाक्ये कुशलः वाक्यकुशलः इति सप्तमीतत्पुरुषसमासः।
- उवाच – वच्-धातोः लिटि प्रथमपुरुषैकवचने उवाच इति रूपम्।

**सन्धिकार्यम् -**

- हनुमांस्तौ = हनुमान् + तौ। (हल्-सन्धिः)
- वाक्यज्ञो वाक्यकुशलः = वाक्यज्ञः + वाक्यकुशलः। (विसर्गसन्धिः)
- पुनर्न = पुनः + न। (विसर्गसन्धिः)
- नोवाच = न + उवाच। (गुणसन्धिः)

**प्रयोगपरिवर्तनम्** - वाक्यज्ञेन वाक्यकुशलेन हनुमता तौ एवम् उक्त्वा तु पुनः किञ्चन न ऊचे।

**एतच्छ्रुत्वा वचस्तस्य रामो लक्ष्मणमब्रवीत्।**
**प्रहृष्टवदनः श्रीमान्भ्रातरं पार्श्वतः स्थितम्।।२५।।**

**अन्वयः** - तस्य एतत् वचः श्रुत्वा प्रहृष्टवदनः श्रीमान् रामः पार्श्वतः स्थितं भ्रातरं लक्ष्मणम् अब्रवीत्।



**अन्वयार्थः** - तस्य हनुमतः एतत् इदं वचः वचनं श्रुत्वा निशम्य प्रहृष्टवदनः उत्फुलमुखः श्रीमान् रामः पार्श्वतः पार्श्वे स्थितम् अवस्थितं भ्रातरं सहोदरं लक्ष्मणम् अब्रवीत् अवदत्।

**सरलार्थः** - हनुमन्मुखात् तद्विषये सुग्रीवविषये च सर्वं श्रुत्वा श्रीरामः आनन्दितः जातः। तस्य भ्राता लक्ष्मणः पार्श्वे आसीत्, तं लक्ष्मणं स किमपि वक्तुम् आरब्धवान्।

**तात्पर्यार्थः** - एतावन्तं दीर्घं कालं व्याप्य रामः तूष्णीं भूत्वा हनुमतः महत् भाषणं श्रुतवान्। अतः स इदानीं भाषितुम् आरब्धवान्। हनुमतः एतत् सर्वं वचनं श्रुत्वा रामः महान् आनन्दितः सञ्जातः। रामस्य पार्श्वे तस्य भ्राता लक्ष्मणः आसीत्। रामः हसन् पार्श्वे स्थितं भ्रातरं किमपि वक्तुम् उद्यतः अभवत्। एतावन्तं दीर्घं कालं स्वविषये प्रशंसादिश्रवणेन साधारणानां मनः चञ्चलं भवति। किन्तु रामः स्वप्रशंसां श्रुत्वा अपि अविचलितः सन् तूष्णीम् एव स्थितवान्। एतेन रामस्य धीरत्वं सिद्धं भवति।

**व्याकरणविमर्शः** -

- अब्रवीत् - ब्रूधातोः लङ्लकारे प्रथमपुरुषैकवचने अब्रवीत् इति रूपम्।
- प्रहृष्टवदनः - प्रहृष्टं वदनं यस्य सः प्रहृष्टवदनः इति बहुव्रीहिसमासः।
- स्थितम् - स्थाधातोः क्तप्रत्यये द्वितीयैकवचने स्थितम् इति रूपम्।

**सन्धिकार्यम् -**

- एतच्छ्रुत्वा = एतत् + श्रुत्वा। (श्चुत्व-सन्धिः)
- वचस्तस्य = वचः + तस्य। (विसर्गसन्धिः)
- रामो लक्ष्मणम् = रामः + लक्ष्मणम्। (विसर्गसन्धिः)

**प्रयोगपरिवर्तनम्** - तस्य एतत् वचः श्रुत्वा प्रहृष्टवदनेन श्रीमता रामेण पार्श्वतः स्थितः लक्ष्मणः अब्रूयत।

**सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः।**
**तमेव काङ्क्षमाणस्य ममान्तिकमिहागतः।।२६।।**

**अन्वयः** - अयं कपीन्द्रस्य महात्मनः सुग्रीवस्य सचिवः तम् एव काङ्क्षमाणस्य मम अन्तिकम् इह आगतः।

**अन्वयार्थः** - अयम् असौ कपीन्द्रस्य वानरराजस्य महात्मनः महाबुद्धेः सुग्रीवस्य सचिवः चरः तम् सुग्रीवम् एव काङ्क्षमाणस्य इच्छतः मम रामस्य अन्तिकम् समीपम् इह अत्र आगतः उपागतः।

**सरलार्थः** - हनुमतः वचनं श्रुत्वा आनन्दितः रामः भ्रातरम् उक्तवान् यत् - अहं सुग्रीवस्य कृते एव अत्र आगतः, किञ्च तस्य कपिराजस्य सुग्रीवस्य एव सचिवः अयं हनुमान् मम सपीपम् आगतवान् इति।

**तात्पर्यार्थः** - श्रीरामः हनुमतः वचनं श्रुत्वा आनन्दितः जातः। रामलक्ष्मणौ वानरराजेन सुग्रीवेण सह एव साक्षात्कारं कर्तुं वने अटन्तौ इमं देशम् आगतवन्तौ। अत्र च तस्य सुग्रीवस्य एव सचिवः



हनुमान् स्वयं तयोः समीपम् आगतवान्। अतः श्रीरामः आनन्दितः सन् पार्श्वे स्थितं भ्रातरं लक्ष्मणम् उक्तवान् यत् - अहं सुग्रीवम् इच्छन् अत्र आगतः, किञ्च अयं हनुमान् तस्य वानरराजस्य सुग्रीवस्य एव सचिवः मम अन्तिकम् आगतवान् इति।

**व्याकरणविमर्शः -**

- कपीन्द्रस्य – कपीनाम् इन्द्रः कपीन्द्रः इति षष्ठीतत्पुरुषसमासः, तस्य कपीन्द्रस्य।
- काङ्क्षमाणस्य – काङ्क्ष्- धातोः शानच्प्रत्यये षष्ठ्येकवचने काङ्क्षमाणस्य इति रूपम्।

**सन्धिकार्यम् -**

- सचिवोऽयम् = सचिवः + अयम्। (विसर्गसन्धिः)
- ममान्तिकम् = मम + अन्तिकम्। (सवर्णदीर्घसन्धिः)
- इहागतः = इह + आगतः। (सवर्णदीर्घसन्धिः)

**प्रयोगपरिवर्तनम्** - अनेन कपीन्द्रस्य महात्मनः सुग्रीवस्य सचिवेन तम् एव काङ्क्षमाणस्य मम अन्तिकम् आगतम्।

**तमभ्यभाष सौमित्रे सुग्रीवसचिवं कपिम्।**
**वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्तमरिन्दमम्।।२७।।**

**अन्वयः** - सौमित्रे! तं सुग्रीवसचिवं कपिं वाक्यज्ञम् अरिन्दमं स्नेहयुक्तम् मधुरैः वाक्यैः अभ्यभाष।

**अन्वयार्थः** - सौमित्रे! हे लक्ष्मण तं हनुमन्तं सुग्रीवसचिवं सुग्रीवानुचरं कपिं वानरं वाक्यज्ञं वाक्यरचनाभिज्ञम् अरिन्दमं शत्रुनाशकं स्नेहयुक्तम् प्रीतियुक्तम् मधुरैः मनोहरैः वाक्यैः वचनैः सुमधुरवचनैः अभ्यभाष अभिभाषस्व।

**सरलार्थः** - रामः पार्श्वे स्थितं भ्रातरं लक्ष्मणम् उक्तवान् यत् - हे लक्षण! सुग्रीवसचिवः हनुमान् यथा स्नेहयुक्तः भवति, तथा मधुरवचनैः भाषणं कुरु इति।

**तात्पर्यार्थः** - रामः पार्श्वे स्थितं भ्रातरं लक्ष्मणम् उक्तवान् यत् - सुग्रीवस्य सचिवः अयं हनुमान् महान् ज्ञानी अस्ति। वाक्यप्रयोगविषये अस्य महती निपुणता वर्तते। अयं हनुमान् शत्रूणां नाशकः अस्ति। हे सुमित्रानन्दन लक्ष्मण! त्वम् अनेन हनुमता सह तव मधुरवाक्यैः एवं भाषणं कुरु, येन स स्नेहयुक्तः प्रीतः भवेत् इति। वस्तुतः सचिवः स्नेहयुक्तः भवति चेत् तस्य राजा अपि प्रीतः भवति। राजा प्रीतः भवति चेत् कार्यं शीघ्रं सिद्धं भवति। अत एव हनुमान् स्नेहयुक्तः भवति चेत् यस्य कार्यस्य कृते रामलक्ष्मणौ अत्र आगतवन्तौ तत् कार्यं सिद्धं भविष्यति।

**व्याकरणविमर्शः -**

- अभ्यभाष – अभिपूर्वकात् भाष्-धातोः लोट्लकारे मध्यमपुरुषैकवचने अभ्यभाष इति रूपम्। अत्र भाष्-धातोः अडागमः, ततः परस्मैपदप्रयोगश्च आर्षः।
- सुग्रीवसचिवम् - सुग्रीवस्य सचिवः सुग्रीवसचिवः इति षष्ठीतत्पुरुषसमासः, तं सुग्रीवसचिवम्।



- स्नेहयुक्तम् - स्नेहेन युक्तः स्नेहयुक्तः इति तृतीयातत्पुरुषसमासः, तं स्नेहयुक्तम्।

**सन्धिकार्यम् -**

- मधुरैर्वाक्यैः = मधुरैः + वाक्यैः। (विसर्गसन्धिः)

**प्रयोगपरिवर्तनम्** - सौमित्रे! स सुग्रीवसचिवः कपिः वाक्यज्ञः अरिन्दमः स्नेहयुक्तः मधुरैः वाक्यैः अभिभाष्यताम्।

**नानृग्वेदविनीतस्य नायजुर्वेदधारिणः।**
**नासामवेदविदुषः शक्यमेवं विभाषितुम्।।२८**

**अन्वयः** - अनृग्वेदविनीतस्य अयजुर्वेदधारिणः असामवेदविदुषः एवं विभाषितुं न शक्यम्।

**अन्वयार्थः** - अनृग्वेदविनीतस्य साभिप्राय-ऋग्वेदाभ्यासरहितस्य अयजुर्वेदधारिणः यजुर्वेदाज्ञस्य असामवेदविदुषः ऊहरहस्यादिगर्भितगानविशेषाज्ञस्य एवं इत्थं विभाषितुं भाषणं कर्तुं न शक्यम् अशक्यम्।

**सरलार्थः** - रामः हनुमतः पाण्डित्येन मुग्धः सन् लक्ष्मणम् उक्तवान् यत् - यः सम्पूर्णम् ऋग्वेदं न जानाति, यः सम्पूर्णं यजुर्वेदं न अधीतवान्, यः सामवेदस्य विद्वान् नास्ति, स एवं पाण्डित्यपूर्णं वाक्यं वक्तुं न शक्नोति। अर्थात् हनुमान् सर्ववेदज्ञः इत्यर्थः।

**तात्पर्यार्थः** - रामायणस्य प्रसिद्धेषु श्लोकेषु अन्यतमः अयं श्लोकः। अस्मिन् श्लोके महर्षिः वाल्मीकिः हनुमतः महाज्ञानित्वं सर्ववेदज्ञत्वं च वर्णयति। रामः हनुमतः ज्ञानं वाक्यप्रयोगे निपुणतां च दृष्ट्वा विस्मितः अभवत्। अत एव स भ्रातरं लक्ष्मणम् उक्तवान् यत् - यः गुरुसमीपे श्रद्धापूर्वकम् स्वरादिकं प्रयुज्य मन्त्रार्थं च ज्ञात्वा ऋग्वेदं न पठति, स एवंविधं ज्ञानपूर्णं भाषणं भाषितुं न शक्नोति, किञ्च यः यजुर्वेदं सक्यक् न अधीतवान्, अर्थात् यजुर्वेदे प्रत्येकस्मिन् अनुवाके अन्यस्य अनुवाकस्य सांकर्यं वर्तते, अतः तत् धारयितुं यः न शक्नोति, सः एवंविधं भाषणं भाषितुं न शक्नोति। अपि च यः नियमपूर्वकं सामवेदम् न अधीतवान्, अर्थात् सामवेदे बहूनि रहस्यादिगर्भितानि गानानि सन्ति, तानि गानानि यः न जानाति, स एवंविधं भाषणं भाषितुं न शक्नोति इति।

अनेन हनुमान् ऋग्वेदं श्रद्धापूर्वकं पठितवान्, यजुर्वेदम् अपि सम्यक् अधीतवान्, सामवेदं च नियमपूर्वम् अधीतवान् इति वक्तुम् इच्छति श्रीरामः। साधारणतया लोके एवंविधः विद्वान् दुष्करः वर्तते। रामसदृशः महान् ज्ञानी हनुमतः प्रशंसां करोति। अतः हनुमान् सामान्यः न सूचितं भवति।

**व्याकरणविमर्शः** -

- अनृग्वेदविनीतस्य – ऋग्वेदस्य विनीतः ऋग्वेदविनीतः इति षष्ठीतत्पुरुषसमासः। न ऋग्वेदविनीतः अनृग्वेदविनीतः इति नञ्तत्पुरुषसमासः, तस्य अनृग्वेदविनीतस्य।
- अयजुर्वेदधारिणः- यजुर्वेदं धारयति इति यजुर्वेदधारी, न यजुर्वेदधारी अयजुर्वेदधारी इति नञ्तत्पुरुषसमासः, तस्य अयजुर्वेदधारिणः।



- असामवेदविदुषः - सामवेदस्य विद्वान् सामवेदविद्वान् इति षष्ठीतत्पुरुषसमासः। न सामवेदविद्वान् असामवेदविद्वान् इति नञ्तत्पुरुषसमासः, तस्य असामवेदविदुषः।
- विभाषितुम् - विपूर्वकात् भाष्-धातोः तुमुन्प्रत्यये विभाषितुम् इति रूपम्।

**सन्धिकार्यम् -**

- नानृग्वेदविनीतस्य = न + अनृग्वेदविनीतस्य। (सवर्णदीर्घसन्धिः)
- नायजुर्वेदधारिणः = न + अयजुर्वेदधारिणः। (सवर्णदीर्घसन्धिः)
- नासामवेदविदुषः = न + असामवेदविदुषः। (सवर्णदीर्घसन्धिः)

**प्रयोगपरिवर्तनम्** - अनृग्वेदविनीतः अयजुर्वेदधारी असामवेदविद्वान् एवं विभाषितुं न शक्नुयात्।

**नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।**
**बहु व्याहरताऽनेन न किंचिदपशब्दितम्।।२९।।**

**अन्वयः** - नूनम अनेन कृत्स्नं व्याकरणं बहुधा श्रुतम्। (अत एव) बहु व्याहरता अनेन. किञ्चित् न अपशब्दितम्।

**अन्वयार्थः** - नूनम् अनेन हनुमता कृत्स्नं समग्रं व्याकरणं व्याकरणशास्त्रं बहुधा बहुवारं श्रुतम् अधीतम्। (अत एव) बहु अनेकविधं व्यहरता कथयता अनेन किञ्चित् न अपशब्दितम् अशुद्धं भाषितम्।

**सरलार्थः** - हनुमतः पाण्डित्येन मुग्धः रामः लक्ष्मणम् उक्तवान् यत् - हनुमान् सम्पूर्णं व्याकरणं बहुवारं पठितवान्, अत एव स एतावत्कालपर्यन्तं बहु किमपि उक्तवान्, परन्तु न एकस्यापि अपशब्दस्य प्रयोगं कृतवान्।

**तात्पर्यार्थः** - पूर्वस्मिन् श्लोके रामः हनुमतः वेदज्ञत्वविषये उक्तवान्। अतः सम्प्रति तस्य व्याकरणज्ञानित्वम् अपि वदति। रामः पार्श्वे स्थितं भ्रातरं लक्ष्मणम् उक्तवान् यत् - अयं हनुमान् न केवलं वेदम् एव जानाति, अयं तु सम्पूर्णं व्याकरणशास्त्रं बहुवारम् अधीतवान्। अतः कः शब्दः साधुः अस्ति, कः शब्दः असाधुः अस्ति इति ज्ञानं तस्य वर्तते। किञ्च कस्य शब्दस्य कः अर्थः इत्यपि ज्ञानं तस्य वर्तते। तस्मात् स एतावत्कालपर्यन्तं बहु भाषितवान्, परन्तु एकस्यापि अपशब्दस्य प्रयोगं न कृतवान्। सर्वेषां शब्दानां कः प्रत्ययः अस्ति, का च प्रकृतिः अस्ति इति सम्यक्-तया जानाति हनुमान्। अतः स सर्वान् साधुशब्दान् एव स्व-स्व-अर्थे प्रयुक्तवान्। वस्तुतः अनेन श्लोकेन, हनुमान् वेद-व्याकरण-इत्यादिसर्वविषयान् जानाति इति वर्णयिति महर्षिः वाल्मीकिः।

**व्याकरणविमर्शः** -

- श्रुतम् - श्रवणार्थकात् श्रुधातोः क्तप्रत्यये श्रुतम् इति रूपम्।
- व्याहरता - विपूर्वकात् आपूर्वकात् च हृधातोः शतृप्रत्यये तृतीयैकवचने व्याहरता इति रूपम्।
- अपशब्दितम् - अपपूर्वकात् शब्द-धातोः क्तप्रत्यये नपुंसकलिङ्गे अपशब्दितम् इति रूपम्।



**सन्धिकार्यम् -**

- व्याहरताऽनेन = व्याहरता अनेन। (सवर्णदीर्घसन्धिः)

**प्रयोगपरिवर्तनम्** - नूनम् अयं कृत्स्नं व्याकरणं बहुधा श्रुतवान्। (अत एव) बहु व्याहरन् अयं किञ्चित् न अपशब्दितवान्।

**न मुखे नेत्रयोश्चापि ललाटे च भ्रुवोस्तथा।**
**अन्येष्वपि च सर्वेषु दोषः संविदितः क्वचित्।।३०।।**

**अन्वयः** - (अस्य) मुखे नेत्रयोः ललाटे भ्रुवोः च तथा अन्येषु सर्वेषु (अङ्गेषु) न क्वचित् दोषः संविदितः।

**अन्वयार्थः** - (अस्य हनुमतः) मुखे वदने नेत्रयोः नयनयोः ललाटे अलिके भ्रुवोः भ्रूमध्ये च तथा अन्येषु एतद्भिन्नेषु सर्वेषु सकलेषु (अङ्गेषु) न क्वचित् कुत्रचित्, दोषः विकारादिदोषः संविदितः लक्षितः।

**सरलार्थः** - श्रीरामः भ्रातरं लक्ष्मणं प्रति उक्तवान् यत् - हनुमान् एतावत्कालपर्यन्तं बहु किमपि भाषितवान्, परन्तु अस्य न कस्मिंश्चित् अङ्गे न कश्चन दोषः दृष्टः इति। हनुमान् शिक्षाशास्त्रं सम्यक् जानाति इत्यर्थः।

**तात्पर्यार्थः** - अस्मिन् श्लोके महर्षिः वाल्मीकिः हनुमतः शिक्षाशास्त्रज्ञत्वं वर्णयति। साधारणजनाः यदा वार्तालापं कुर्वन्ति तदा तेषां मुख-ललाट-इत्यादिषु अङ्गेषु भिन्ना भिन्ना विकृतिः दृश्यते। वार्तालापसमये अङ्गेषु एवं विकृतिः भवति चेत् शिक्षाशास्त्रे स वक्तुः दोषः इति उच्यते। परन्तु हनुमतः अयं दोषः नासीत् इति रामः उक्तवान्। हनुमान् रामलक्ष्मणयोः समीपम् आगत्य बहु किमपि उक्तवान्। परन्तु तस्य मुखे चक्षुर्द्वये ललाटे भ्रूमध्ये किञ्च एतद्भिन्नेषु अङ्गेषु न कापि विकृतिः अभवत्। तेन हनुमान् शिक्षाशास्त्रम् अपि सक्यक्-तया पठितवान् इति ज्ञायते। अत एव स दोषान् सक्यक् जानाति। अत्र च रामः अपि सूक्ष्मदर्शी इति ज्ञायते। अत एव वार्तालापसमये हनुमतः अङ्गेषु विकृतिः न अभवत् इति सूक्ष्मं विषयम् अपि स लक्षितवान्।

**सन्धिकार्यम् -**

- नेत्रयोश्चापि = नेत्रयोः + च + अपि। (विसर्गसन्धिः, सवर्णदीर्घसन्धिः)
- भ्रुवोस्तथा = भ्रुवोः + तथा। (विसर्गसन्धिः)
- अन्येष्वपि = अन्येषु + अपि। (यण्-सन्धिः)

**प्रयोगपरिवर्तनम्** - (अस्य) मुखे नेत्रयोः ललाटे भ्रुवोः च तथा अन्येषु सर्वेषु (अङ्गेषु) न क्वचित् दोषं संविदितवान् (अहम्)।

**अविस्तरमसंदिग्धमविलम्बितमव्यथम्।**
**उरःस्थं कण्ठगं वाक्यं वर्तते मध्यमस्वरम्।।३१।।**



**अन्वयः** - (अस्य ) अविस्तरम् असंदिग्धम् अविलम्बितम् अव्यथम् उरःस्थं कण्ठगं मध्यमस्वरं वाक्यं वर्तते।

**अन्वयार्थः** -(अस्य हनुमतः) अविस्तरम् विस्ताररहितम् असंदिग्धम् सन्देहरहितम् अविलम्बितम् अद्रुतम् अव्यथम् न व्यथाप्रदायकम् उरःस्थं मन्द्रं कण्ठगं मध्यमस्वरं मध्यमस्वरयुक्तं वाक्यं वचनं वर्तते अस्ति।

**सरलार्थः** - श्रीरामः हनुमता प्रयुक्तस्य वाक्यस्य प्रशंसां कुर्वन् लक्ष्मणम् उक्तवान् यत् - हनुमान् यद् यद् वाक्यम् प्रयुक्तवान्, तत् वाक्यं बहुविस्तृतं नास्ति, सन्देहरहितं वर्तते, बहु द्रुतम् अपि न उच्चारितं, किञ्च श्रोतॄणां व्यथादायकं नास्ति, अपि च मध्यमस्वरेण प्रयुक्तं वर्तते इति।

**तात्पर्यार्थः** - प्रस्तुतश्लोकेन रामः हनुमतः वाक्यरचनायाः सौष्ठवं वर्णयति। साधारणजनाः यत् वाक्यं प्रयुञ्जन्ते तत् कदाचित् बहु विस्तृतं भवति, किञ्च किम् अक्षरं प्रयुक्तम् इति अवगमने कदाचित् सन्देहः भवति। कदाचित् तु जनाः वाक्यं बहु द्रुतम् उच्चारयन्ति, तस्मात् तत् श्रवणेन कर्णे व्यथा उत्पद्यते, अर्थात् बहु श्रुतिकटु भवति। शिक्षाशास्त्रानुसारम् एते अपि वक्तुः दोषाः। एतादृशः एकोऽपि दोषः हनुमतः नासीत्। हनुमान् यत् यत् वाक्यं प्रयुक्तवान् तत् बहु संक्षिप्तम्, किञ्च एवंप्रकारेण स वर्णान् प्रयुक्तवान् येन वर्णबोधे रामस्य न कोऽपि सन्देहः उत्पन्नः। अपि च स वाक्यानि बहु द्रुतं न उच्चारितवान्, तेन तानि वाक्यानि श्रुतिमधुराणि आसन्। किञ्च स सर्वदा मध्यमस्वरेण एव वाक्यानि प्रयुक्तवान्। वाक्यप्रयोगविषये शिक्षाशास्त्रे उक्ताः दोषाः हनुमतः नासन् इति वर्णयति महर्षिः वाल्मीकिः अनेन श्लोकेन।

**व्याकरणविमर्शः -**

- अविस्तरम् - अविद्यमानः विस्तरः यस्मिन् तत् अविस्तरम् इति बहुव्रीहिसमासः।
- असन्दिग्धम् - न सन्दिग्धम् असन्दिग्धम् इति नञ्तत्पुरुषसमासः।
- अविलम्बितम् - न विलम्बितम् अविलम्बितम् इति नञ्तत्पुरुषसमासः।
- अव्यथम् - न विद्यते व्यथा यस्मात् तत् अव्यथम् इति बहुव्रीहिसमासः।
- मध्यमस्वरम् - मध्यमः स्वरः यस्य तत् मध्यमस्वरम् इति बहुव्रीहिसमासः।

**प्रयोगपरिवर्तनम्** - (अस्य ) अविस्तरेण असंदिग्धेन अविलम्बितेन अव्यथेन उरःस्थेन कण्ठगेन मध्यमस्वरेण वाक्येन वृत्यते।

**संस्कारक्रमसंपन्नामद्रुतामविलम्बिताम्।**
**उच्चारयति कल्याणीं वाचं हृदयहर्षिणीम्।।३२।।**

**अन्वयः** - (अयं) संस्कारक्रमसंपन्नाम् अद्रुताम् अविलम्बितां हृदयहर्षिणीं कल्याणीं वाचम् उच्चारयति।



**अन्वयार्थः** - (अयं हनुमान्) संस्कारक्रमसंपन्नाम् संस्काराणां जनने समर्थाम् अद्भुताम् अतिशीघ्र-उच्चारणरहिताम् अविलम्बितां अविलम्बेन उच्चारितां हृदयहर्षिणीं मधुरां कल्याणीं कल्याणप्रदां वाचम् सरस्वतीम् उच्चारयति वदति।

**सरलार्थः** - रामः हनुमतः वाचः प्रशंसां कुर्वन् लक्ष्मणम् उक्तवान् यत् - हनुमतः वाक् क्रमेण शिक्षाव्याकरण-इत्यादिसंस्कारान् जनयति, किञ्च ये वर्णाः प्रयुक्ताः, तेषां ध्वंसं करोति यत् शीघ्रोच्चारणं तद्रहिता, विलम्बेन न उच्चारिता वर्तते। अपि च तस्य वाचः श्रवणेन हृदये आह्लादः भवति इति।

**तात्पर्यार्थः** - अस्मिन् श्लोके रामः पार्श्वे स्थितं भ्रातरं लक्ष्मणं प्रति हनुमता प्रयुक्तायाः वाचः माहात्म्यं वदति। वर्णानाम् अतिशीघ्रम् उच्चारणं क्रियते चेत्, ये वर्णाः यथायथम् उक्ताः, ते अपि ध्वंसाः भवन्ति, अर्थात् सम्यक् न श्रूयन्ते। किञ्च द्वयोः शब्दयोः मध्ये उच्चारणे महान् विलम्बः भवति चेत्, वाक्यस्य अर्थः नावगम्यते। हनुमतः वाक् तु क्रमेण शिक्षा-व्याकरण-इत्यादीनां संस्कारान् जनयति, अर्थात् हनुमतः वाक् शिक्षा-व्याकरण-इत्यादिशास्त्रदृष्ट्या यथायथं वर्तते। किञ्च अतिशीघ्रोच्चारणरहिता, तस्मात् यथायथं प्रयुक्तानां वर्णानां ध्वंसं न करोति। किञ्च तस्य द्वयोः शब्दयोः मध्ये उच्चारणे महान् विलम्बः नासीत्, अत एव शब्दयोः मध्ये सम्बन्धः आसीत्। एतान् विहाय अपि बहवः गुणाः तस्य वाण्याम् आसीत्। एवंगुणयुक्तां तस्य वाचं श्रुत्वा रामः अतीव आनन्दितः जातः।

**व्याकरणविमर्शः -**

- संस्कारक्रमसंपन्नाम् - संस्काराणां क्रमः संस्कारक्रमः इति षष्ठीतत्पुरुषसमासः। संस्कारक्रमे संपन्ना संस्कारक्रमसम्पन्ना इति सप्तमीतत्पुरुषसमासः, तां संस्कारक्रमसंपन्नाम्।
- अविलम्बिताम् - न विलम्बिता अविलम्बिता इति नञ्तत्पुरुषसमासः।
- हृदयहर्षिणीम् - हृदयं हर्षयति इति हृदयहर्षणी। तां हृदयहर्षिणीम्।

**प्रयोगपरिवर्तनम्** - (अनेन हनुमता) संस्कारक्रमसंपन्ना अद्भुता अविलम्बिता हृदयहर्षिणी कल्याणी वाक् उच्चार्यते।

**अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया।**
**कस्य नाराध्यते चित्तमुद्यतासेररेरपि।।३३।।**

**अन्वयः** - अनया चित्रया त्रिस्थानव्यञ्जनस्थया वाचा उद्यतासेः अपि कस्य अरेः चित्तं न आराध्यते।

**अन्वयार्थः** - अनया चित्रया आश्चर्यावहया त्रिस्थानव्यञ्जनस्थया त्रिषु स्थानेषु उरःकण्ठशिरःसु उच्चारितया वाचा वाण्या उद्यतासेः उद्यखड्गस्य अपि कस्य अरेः शत्रोः चित्तं मनः न आराध्यते अनुकूल्यते।

**सरलार्थः** - रामः हनुमतः वाण्याः प्रंशंसां कृतवान् यत् - सा वाक् वक्षःकण्ठशिरःसु त्रिषु स्थानेषु उच्चारिता, तस्मात् सा वाक् आश्चर्यजनिका वर्तते, असिं धृत्वा मारयितुं प्रवृत्तं शत्रुं प्रति एवंविधा वाक् प्रयुज्यते चेत् स शत्रुः अपि सन्तुष्टः भवति इति।



**तात्पर्यार्थः -** अस्मिन् श्लोके रामः पार्श्वे स्थितं भ्रातरं लक्ष्मणं प्रति हनुमता प्रयुक्तायाः वाचः सामर्थ्यं वदति। वर्णाः त्रिविधाः भवन्ति उदात्तः अनुदात्तः स्वरितः च। उदात्तवर्णस्य उच्चारणं शिरसि भवति। अनुदात्तवर्णस्य उच्चारणं वक्षसि भवति। स्वरितवर्णस्य च उच्चारणं कण्ठे भवति। उदात्त-अनुदात्त-स्वरित-इति स्वरसहितः वर्णः प्रयुज्यते चेत् स वर्णः साधुः भवति। हनुमतः वाक् शिरः-वक्षः-कण्ठ-इत्यादिस्थानेषु उच्चारिता आसीत्। अर्थात् हनुमान् उदात्त-अनुदात्त-स्वरित-इति स्वरसहितान् एव वर्णान् प्रयुक्तवान् इति ज्ञायते। असिं धृत्वा मारयितुम् उद्यतम् शत्रुं प्रति कश्चित् जनः यदि एवं रमणीयायाः वाचः प्रयोगं करोति, तर्हि स शत्रुः अपि तया वाचा महान् सन्तुष्टः भवति। पुनः तस्य हानिं न जनयति। एवंविधं सामर्थ्यम् आसीत् हनुमतः वाचः।

**व्याकरणविमर्शः -**

- त्रिस्थानव्यञ्जनस्थया - त्रीणि च तानि स्थानानि त्रिस्थानानि इति इतरेतरयोगद्वन्द्वसमासः। त्रिस्थानेषु व्यञ्जनं त्रिस्थानव्यञ्जनम् इति सप्तमीतत्पुरुषसमासः। त्रिस्थानव्यञ्जनेषु तिष्ठति इति त्रिस्थानव्यञ्जनस्था, तया त्रिस्थानव्यञ्जनस्थया।
- आराध्यते - आपूर्वकात् राध-धातोः कर्मणि आराध्यते इति रूपम्।
- उद्यतासेः - उद्यतः असिः येन स उद्यतासिः इति बहुव्रीहिसमासः, तस्य उद्यतासेः।

**सन्धिकार्यम् -**

- नाराध्यते = न + आराध्यते। (सवर्णदीर्घसन्धिः)
- उद्यतासेररेः = उद्यतासेः + अरेः। (विसर्गसन्धिः)
- अरेरपि = अरेः + अपि। (विसर्गसन्धिः)

**प्रयोगपरिवर्तनम् -** इयं चित्रा त्रिस्थानव्यञ्जनस्था वाक् उद्यतासेः अपि कस्य अरेः चित्तं न आराध्नोति।

**एवंविधो यस्य दूतो न भवेत् पार्थिवस्य तु।**
**सिध्यन्ति हि कथं तस्य कार्याणां गतयोऽनघ।।३४।।**

**अन्वयः -** (हे) अनघ! यस्य पार्थिवस्य एवंविधः दूतः न भवेत् तस्य कार्याणां गतयः कथं सिध्यन्ति

**अन्वयार्थः -** (हे) अनघ! हे पापरहित लक्ष्मण! यस्य पार्थिवस्य राज्ञः एवंविधः एवंगुणयुक्तः दूतः चरः न भवेत् न स्यात् तस्य राज्ञः कार्याणां कर्माणां गतयःफलानि कथं कस्मात् कारणात् सिध्यन्ति सिद्धानि भवन्ति।

**सरलार्थः -** रामः पार्श्वे स्थितं भ्रातरं लक्ष्मणम् उक्तवान् यत् - यस्य राज्ञः हनुमत्सदृशः महाज्ञानी वाक्यकुशलः सर्ववेदज्ञः दूतः भवति, स राजा दूतवाक्यानुसारं कार्यं करोति चेत् तस्य सर्वेषां कार्याणां सिद्धिः अवश्यं भवति इति।



**तात्पर्यार्थः** - अस्मिन् श्लोके रामः हनुमतः दूतत्वस्य प्रशंसां करोति। दूतः ज्ञानी चतुरः वाक्कुशलः वा भवति चेत् राज्ञः बहु सौकर्यं भवति। तस्य कार्याणि शीघ्रम् एव सिध्यन्ति। मूर्खः दूतस्तु शत्रूणां समीपे राज्ञः गुप्तं तत्त्वं कथयेत्। अतः दूतः मूर्खः भवति चेत् राज्ञः हानिः एव सम्भवति। वानरराजस्य सुग्रीवस्य दूतः आसीत् हनुमान्। स महाज्ञानी, वाक्कुशलः सर्ववेदज्ञः व्याकरण-शिक्षा-इत्यादिशास्त्रज्ञः च आसीत्। अत एव रामः भ्रातरं लक्ष्मणम् उक्तवान् यत् - एवंगुणसम्पन्नः हनुमत्सदृशः दूतः यस्य राज्ञः अस्ति, तस्य राज्ञः सर्वाणि कार्याणि अवश्यम् एव सिध्यन्ति, न एकम् अपि कर्म निष्फलं भवति। अस्मिन् श्लोके रामः भ्रातरं लक्ष्मणम् अनघ इति सम्बोधनं कृतवान्। अनघः इत्यस्य अर्थः यस्य न किञ्चित् पापं वर्तते सः इति। तस्मात् लक्ष्मणः सम्पूर्णतया पापरहितः आसीत् इति लक्ष्मणस्य माहात्म्यम् अपि अत्र सिध्यति।

**व्याकरणविमर्शः -**

- अनघ – अविद्यमानम् अघं यस्मिन् सः अनघः इति बहुव्रीहिसमासः। अनघशब्दस्य सम्बोधनैकवचने अनघ! इति रूपम्।

**सन्धिकार्यम् -**

- एवंविधो यस्य = एवंविधः + यस्य। (विसर्गसन्धिः)
- दूतो न = दूतः + न। (विसर्गसन्धिः)
- गतयोऽनघ = गतयः + अनघ। (विसर्गसन्धिः)

**प्रयोगपरिवर्तनम्** - (हे) अनघ! यस्य पार्थिवस्य एवंविधेन दूतेन न भूयतां तस्य कार्याणां गतिभिः कथं सिध्यते।

**एवंगुणगणैर्युक्ता यस्य स्युः कार्यसाधकाः।**
**तस्य सिध्यन्ति सर्वेऽर्था दूतवाक्यप्रचोदिताः।।३५।।**

**अन्वयः** - यस्य कार्यसाधकाः एवंगुणगणैः युक्ताः स्युः, तस्य सर्वे अर्थाः दूतवाक्यप्रचोदिताः (सन्तः) सिध्यन्ति।

**अन्वयार्थः** - यस्य राज्ञः कार्यसाधकाः कर्मचारिणः एवंगुणगणैः वाक्चातुर्यादिगुणसमूहैः युक्ताः युताः स्युः भवेयुः, तस्य राज्ञः सर्वे अर्थाः सर्वाणि कार्याणि दूतवाक्यप्रचोदिताः दूतवाक्यानुसारं कृताः (सन्तः) सिध्यन्ति सिद्धा भवन्ति।

**सरलार्थः** - रामः हनुमतः विषये लक्ष्मणम् अवदत् यत् - कस्यचित् राज्ञः यदि हनुमत्सदृशः विद्वान् वाक्कुशलः कर्मचारी भवति, तर्हि तस्य कर्मचारिणः वाक्यानुसारेण कार्यं क्रियते चेत् तत् कार्यम् अवश्यं सिद्धं भवति।

**तात्पर्यार्थः** - सर्ववेदज्ञत्वं, वाक्माधुर्यं, वाक्कुशलत्वं व्याकरण-शिक्षा-इत्यादिशास्त्रज्ञत्वम् इत्यादयः बहवः गुणाः हनुमति आसन्। हनुमान् च वानरराजस्य सुग्रीवस्य सचिवः आसीत्। अत एव



रामः भ्रातरं लक्ष्मणम् उक्तवान् यत् - यस्य राज्ञः एवंगुणसमूहैः युक्तः हनुमत्सदृशः कार्यसहायकः भवति, स राजा यदि तस्य कार्यसहायकस्य सचिवस्य निर्देशानुसारेण कार्यं सम्पादयति, तर्हि तानि कार्याणि अवश्यम् एव सिध्यन्ति। अत एव राज्ञा तादृशस्य गुणसम्पन्नस्य सचिवस्य एव नियुक्तिः करणीया इत्यपि ज्ञायते। राजकार्यार्थं मूर्खः सचिवः नियुज्यते चेत् राज्ञः सर्वं कार्यं निष्फलम् एव भवति। किञ्च अनेन राज्ञः सुग्रीवस्यापि शीघ्रम् एव अभीष्टलाभः भविष्यति इति सूचितवान् रामः। वस्तुतः रामः हनुमतः एवं प्रशंसां कृतवान्, तेन हनुमति स महाप्रसन्नः जातः इति ज्ञायते।

**व्याकरणविमर्शः -**

- युक्ताः - युज्-धातोः क्तप्रत्यये प्रथमाबहुवचने युक्ताः इति रूपम्।
- स्युः - अस्-धातोः लोट्लकारे प्रथमपुरुषबहुवचने स्युः इति रूपम्।
- कार्यसाधकाः - कार्यं साधयन्ति इति कार्यसाधकाः।
- दूतवाक्यप्रचोदिताः - दूतस्य वाक्यं दूतवाक्यम् इति षष्ठीतत्पुरुषसमासः। दूतवाक्येन प्रचोदिताः दूतवाक्यप्रचोदिताः इति तृतीयातत्पुरुषसमासः।

**सन्धिकार्यम् -**

- गुणगणैर्युक्ताः = गुणगणैः + युक्ताः। (विसर्गसन्धिः)
- युक्ता यस्य = युक्ताः + यस्य। (विसर्गसन्धिः)
- सर्वेऽर्थाः = सर्वे + अर्थाः। (पूर्वरूपसन्धिः)

**प्रयोगपरिवर्तनम्** - यस्य कार्यसाधकैः एवंगुणगणैः युक्तैः भवेयम्, तस्य सर्वैः अर्थैः दूतवाक्यप्रचोदितैः (सद्भिः) सिध्यते।



## पाठगतप्रश्नाः

१. हनुमान् कस्य सचिवः आसीत्।

२. कस्य एवं विभाषितुं न शक्यं भवति।

३. किं शास्त्रं हनुमता बहुधा श्रुतम्।

४. हनुमतः केषु अङ्गेषु दोषः न संविदितः।

५. हनुमान् कीदृशं वाक्यम् उक्तवान्।

६. हनुमतः वाक् कीदृशी आसीत्।

७. हनुमतः त्रिस्थानव्यञ्जनस्थया चित्रया वाचा कस्य चित्तम् आराध्यते।

८. हनुमत्सदृशः दूतः भवति चेत् पार्थिवस्य किं सिध्यति।

९. राज्ञः अर्थाः कथं सिध्यन्ति।

१०. वाक्यज्ञो वाक्यकुशलः पुनर्नोवाच किञ्चन – इत्यत्र वाक्यज्ञः इत्यनेन कः निर्दिष्टः



क)लक्ष्मणः ख)हनुमान्

ग)रामः घ)वाली

११. रामलक्ष्मणौ कम् अन्विषन्तौ पम्पानद्याः तीरे उपस्थितौ

क)सुग्रीवम् ख)वालिनम्

ख)हनुमन्तम् ग)सीताम्

१२. सौमित्रे - इत्यनेन कः सम्बोधितः

क)रामः ख)हनुमान्

ग)सुग्रीवः घ)लक्ष्मणः

१३. तमभ्यभाष सौमित्रे सुग्रीवसचिवं कपिम् - इति कस्य उक्तिः

क)लक्ष्मणस्य ख)हनुमतः

ग)रामस्य घ)सुग्रीवस्य

१४. अविस्तरम् असन्दिग्धम् अविलम्बितम् अव्यथम् इत्येतादृशं वाक्यं कस्य

क)सुग्रीवस्य ख)रामस्य

ग)हनुमतः घ)लक्मणस्य

१५. क-स्तम्भेन सह ख-स्तम्भं मेलयतु - -

| **क-स्तम्भः** | **ख-स्तम्भः** |
|---|---|
| १. प्रहृष्टवदनः | क. समीपम् |
| २. सौमित्रिः | ख. विद्यते |
| ३. अन्तिकम् | ग. श्रीरामः |
| ४. महावैयाकरणः | घ. वदति |
| ५. मध्यमस्वरम् | ङ. लक्ष्मणः |
| ६. वर्तते | च. हनुमता सदृशः |
| ७. हृदयहर्षिणी | छ. हनुमान् |
| ८. उच्चारयति | ज. सन्तोष्यते |
| ९. दूतः | झ. वाक्यम् |
| १०. आराध्यते | ञ. वाक् |



## पाठसारः

सुग्रीवादेशानुसारं हनुमान् स्ववानररूपम् आच्छाद्य भिक्षुकवेषेण पम्पासरोवरतीरे स्थितयोः रामलक्ष्मणयोः समीपम् उपस्थितः। तत्र गत्वा च स तयोः पूजनादिकं विधाय तयोः वीरत्वस्य सौन्दर्यस्य



च प्रशंसां कृतवान्। ततः स सुग्रीवविषये ताभ्याम् उक्त्वा सुग्रीवसचिवत्वेन स्वपरिचयं प्रदत्तवान्। ततः स पुनः किमपि अनुक्त्वा तूष्णीम् एव स्थितवान्। तस्य एतत्सर्वं वचनं श्रुत्वा श्रीरामः महान् आनन्दितो जातः। तस्य पार्श्वे एव भ्राता लक्ष्मणः आसीत्। ततः स लक्ष्मणम् उद्दिश्य हनुमतः प्रशंसां कर्तुम् आरब्धवान्। एतावत्कालपर्यन्तं हनुमान् यादृशीं भाषां प्रयुक्तवान्, तादृशं कथयितुं तु कश्चन महान् ज्ञानी सर्ववेदानां विद्वान् एव शक्नुयात्। तेन हनुमान् ऋग्वेद-सामवेद-यजुर्वेद-इति त्रयाणां वेदानाम् एव ज्ञाता आसीत् इति प्रशंसति श्रीरामः। एतावन्तं समयं बहु किमपि कथयतः तस्य मुखात् न कश्चन अपशब्दः प्रयुक्तः। कश्चन यदि व्याकरणशास्त्रं बहुवारम् अधीतवान् स्यात्, स एव एवं भाषितुं शक्नोति इति हनुमतः वैयाकरणत्वं प्रशंसति श्रीरामः।

हनुमान् न केवलं व्याकरणशास्त्रम् अपि तु शिक्षादिशास्त्राणि अपि आमूलचूडम् अधीतवान्। अतः अत्र भाषणकाले अङ्गेषु विकृतिः इत्येतादृशाः ये दोषाः, तान् हनुमान् सम्यग्रूपेण जानाति स्म। अत एव बहु भाषमाणस्य तस्य न कस्मिंश्चित् अङ्गे विकृतिः लक्षिता श्रीरामेण। हनुमतः वाक् सम्पूर्णतया शिक्षाशास्त्रनिर्दिष्टा एव आसीत्। सर्वदा मध्यमस्वरेण एव स भाषमाण आसीत्। तस्य वचसः श्रवणेन व्याकरणादीनां संस्कारः उत्पन्नः भवति स्म श्रीरामस्य। अतः तच्छ्रवणेन परमानन्दः भगवान् श्रीरामः अपि आनन्दितः जातः। एवंविधा वाक् प्रयुज्यते चेत् असिं धृत्वा मारयितुं प्रवृत्तः अपि रिपुः वशीभूतः भवति इत्युक्त्वा तस्य वचसः माहात्म्यं प्रकाशितवान् श्रीरामः। कस्यापि राज्ञः एवंनानागुणयुक्तः दूतः भवति चेत् स राजा शीघ्रम् एव सिद्धिं गच्छेत् इत्यत्र नास्ति कोऽपि सन्देहः। किञ्च स राजा यदि दूतवाक्यानुसारं सर्वं कार्यं साधयेत् तर्हि अवश्यम् एव तस्य सर्वे अर्थाः सिद्धाः भवन्ति इति कथयन् श्रीरामः तस्य दूतत्वस्यापि प्रशंसां कृतवान् इति पाठस्यास्य सारः।



## किमधिगतम्

- वाग्भूषणमेव सर्वभूषणापेक्षया यथायथं भूषयति मनुष्यान्।
- वाग्माधुर्येण भगवान् अपि महान्तं सन्तोषं प्राप्नोति।
- व्याकरण-शिक्षाशात्रज्ञस्य वाक्यप्रयोगसमये न कोऽपि वाक्सम्बन्धी दोषः सम्भवति।
- वाचः शक्त्या तु असिं धृत्वा मारयितुं प्रवृत्तः अपि शत्रुः वशीभूतः भवति।
- राज्ञा सर्वदा शास्त्रज्ञत्ववाग्माधुर्य-इत्यादिगुणयुक्तः दूतः नियोक्तव्यः।
- गुणिनः कार्यसहायकस्य निर्देशानुसारं कार्ये क्रियमाणे राज्ञः सर्वे अर्थाः सिध्यन्ति।



## पाठान्तप्रश्नाः

१) रामः पार्श्वे स्थितं भ्रातरं किम् उक्तवान् इति सप्रसङ्गं लिखत।

२) हनुमतः व्याकरणज्ञानविषये रामस्य उक्तिं यथाग्रन्थम् आलोचयत।

३) नानृग्वेदविनीतस्य.....इत्यादिश्लोकस्य संक्षेपेण व्याख्यां लिखत।



४) हनुमतः वाचः सौन्दर्यं वर्णयत।

५) हनुमतः शिक्षाशास्त्रज्ञानविषये रामस्य उक्तिं यथाग्रन्थम् आलोचयत।

६) हनुमतः दूतत्वविषये रामेण किम् उक्तम्।



## पाठगतप्रश्नानामुत्तराणि

१) कपीन्द्रस्य महात्मनः सुग्रीवस्य।

२) अनृग्वेदविनीतस्य अयजुर्वेदधारिणः असामवेदविदुषः

३) व्याकरणशास्त्रम्

४) मुखे नेत्रयोः ललटे भ्रुवोः तथा अन्येषु सर्वेषु अङ्गेषु

५) अविस्तरम् असन्दिग्धम् अविलम्बितम् अव्यथम् उरःस्थं कण्ठगं मध्यमस्वरं च

६) संस्कारक्रमसम्पन्ना अद्भुता अविलम्बिता कल्याणी हृदयहर्षिणी च

७) उद्यतासेः अरेः अपि

८) कार्याणां गतयः सिध्यन्ति

९) दूतवाक्यप्रचोदिताः सन्तः

१०) ख)

११) क)

१२) घ)

१३) ग)

१४)ग)

१५) १-ग, २-ङ, ३-क, ४-छ, ५-झ, ६-ख. ७-ञ, ८-घ, ९-च, १०-ज।

॥ इति चतुर्दशः पाठः ॥

# १५

# रामसुग्रीवयोः सख्यम्

## प्रस्तावना

वनवाससमये लङ्केश्वरेण रावणेन माता सीता अपहृता। ततः श्रीरामः सुग्रीवेण सह मैत्रीं संस्थाप्य सुग्रीवशत्रुं वालिनं निहतवान्। तदनन्तरं वानरसेनासहायेन हनुमत्सहायेन च रावणं निहत्य सीतां रक्षितवान् इति वयं सर्वे जानीमः। परन्तु सुग्रीवेण सह केन प्रकारेण तस्य सख्यम् अभवत् इति विषये अस्माकं बहूनाम् एव अज्ञानं वर्तते। तम् एव विषयं वयम् अस्मिन् अन्तिमे पाठे जानीमः। सुग्रीवेण सह सख्यं कर्तुम् इच्छावः इति लक्ष्मणेन उक्ते सति हनुमान् स्वराज्ञः विजयः अवश्यं भविष्यति इति विचिन्त्य महान् आनन्दितः सञ्जातः। एतं विषयं स्पष्टतया ज्ञातुं वयम् इदानीम् अन्तिमान् चतुरः श्लोकान् पठामः।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- लक्ष्मणस्य वाक्यज्ञत्वस्य विषये जानीयात्।
- हनुमतः राज्ञः उपरि कियती प्रीतिः आसीत् इति ज्ञास्यति।
- श्लोके स्थितानां पदानाम् अन्वयः केन प्रकारेण कर्तव्यः इति जानीयात्।
- व्याकरणविषयकं किञ्चित् ज्ञानं प्राप्नुयात्।
- श्लोकानां व्याख्या केन प्रकारेण कर्तव्या इत्यस्मिन् विषये ज्ञास्यति।

## १५.१) मूलपाठः

**एवम् उक्तस्तु सौमित्रिः सुग्रीवसचिवम् कपिम् ।**
**अभ्यभाषत वाक्यज्ञो वाक्यज्ञम् पवनात्मजम् ॥३६॥**

**विदिता नौ गुणा विद्वन् सुग्रीवस्य महात्मनः ।**
**तमेव चावाम् मार्गावः सुग्रीवम् प्लवगेश्वरम् ॥३७॥**

**यथा ब्रवीषि हनुमान् सुग्रीव वचनादिह ।**



तत् तथा हि करिष्यावो वचनात् तव सत्तम ॥३८॥

तत् तस्य वाक्यम् निपुणम् निशम्य
प्रहृष्ट रूपः पवनात्मजः कपिः ।
मनः समाधाय जयोपपत्तौ
सख्यं तदा कर्तुमियेष ताभ्याम् ॥३९॥

## १५.२) इदानीं मूलपाठम् अवगच्छाम

**एवमुक्तस्तु सौमित्रिः सुग्रीवसचिवं कपिम्।**
**अभ्यभाषत वाक्यज्ञो वाक्यज्ञं पवनात्मजम्।।३६।।**

**अन्वयः** - (रामेण) एवम् उक्तः वाक्यज्ञः सौमित्रिः वाक्यज्ञं सुग्रीवसचिवं पवनात्मजं कपिम् अभ्यभाषत।

**अन्वयार्थः** - (रामेण) एवम् उक्तः भाषितः वाक्यज्ञः वाक्यतात्पर्यज्ञः सौमित्रिः लक्ष्मणः वाक्यज्ञं वाक्यतात्पर्यज्ञं सुग्रीवसचिवं वानरराजस्य सुग्रीवस्य सचिवं पवनात्मजं वायुपुत्रं कपिं वानरं हनुमन्तम् अभ्यभाषत अभ्यवदत्।

**सरलार्थः** - रामः यदा लक्ष्मणस्य समीपे हनुमतः प्रशंसां कृतवान्, ततः परं स लक्ष्मणः रामवचनानुसारं वायोः पुत्रेण वानरराजस्य सुग्रीवस्य सचिवेन महाज्ञानिना हनुमता सह वार्तालापं कर्तुम् आरब्धवान्।

**तात्पर्यार्थः** - रामः एतावन्तं कालं लक्ष्मणस्य समीपे हनुमतः बहुप्रशंसां कृतवान्। अत एव सुमित्रायाः नन्दनः लक्ष्मणः रामस्य वचनात् हनुमतः माहात्म्यं ज्ञातवान्, ततः स इदानीं वायोः नन्दनेन हनुमता सह वार्तालापं कर्तुम् आरब्धवान्। हनुमतः वाक्यतात्पर्यज्ञत्वं पूर्वम् एव वर्णितम्। अनेन श्लोकेन तु महर्षिः वाल्मीकिः सम्प्रति लक्ष्मणस्यापि वाक्यतात्पर्यज्ञत्वं वर्णयति।

### व्याकरणविमर्शः -

- सुग्रीवसचिवम् - सुग्रीवस्य सचिवः सुग्रीवसचिवः इति षष्ठीतत्पुरुषसमासः, तं सुग्रीवसचिवम्।
- अभ्यभाषत – अभिपूर्वकात् भाष्-धातोः लङ्लकारे प्रथमपुरुषैकवचने अभ्यभाषत इति रूपम्।
- सौमित्रिः - सुमित्रायाः अपत्यम् इत्यर्थे सुमित्राशब्दात् इञ्प्रत्यये सौमित्रिः इति रूपम्।

### सन्धिकार्यम् -

- वाक्यज्ञो वाक्यज्ञम् = वाक्यज्ञः + वाक्यज्ञम्। (विसर्गसन्धिः)



**प्रयोगपरिवर्तनम्** - (रामेण) एवम् उक्तेन वाक्यज्ञेन सौमित्रिणा वाक्यज्ञः सुग्रीवसचिवः पवनात्मजः कपिः अभ्यभाष्यत।

**विदिता नौ गुणा विद्वन्सुग्रीवस्य महात्मनः।**
**तमेव चावां मार्गावः सुग्रीवं प्लवगेश्वरम्।।३७।।**

**अन्वयः** - (हे) विद्वन् नौ महात्मनः सुग्रीवस्य गुणाः विदिताः (अत एव) आवां तं प्लवगेश्वरं सुग्रीवम् एव मार्गावः।

**अन्वयार्थः** - (हे) विद्वन् हे महाज्ञानिन् नौ आवयोः रामलक्ष्मणयोः महात्मनः महाबुद्धिशालिनः सुग्रीवस्य गुणाः विदिताः ज्ञाताः (अत एव) आवां राम्लक्ष्मणौ तं प्लवगेश्वरं वानरराजं सुग्रीवम् एव मार्गावः अन्विषावः।

**सरलार्थः** - लक्ष्मणः हनुमन्तं प्रति उक्तवान् यत् - हे महाज्ञानिन् हनुमन् आवां वानरराजस्य सुग्रीवस्य माहात्म्यं ज्ञातवन्तौ, अत एव आवां तस्य सुग्रीवस्य अन्वेषणं कुर्वः इति।

**तात्पर्यार्थः** - वानरराजस्य सुग्रीवस्य अन्वेषणं कर्तुम् एव रामलक्ष्मणौ ऋष्यमूकपर्वतस्य समीपम् आगतवन्तौ। तत्र आगत्य च हनुमता सह साक्षात्कारः अभवत्। हनुमान् तयोः समीपे सुग्रीवस्य बहुप्रशंसां कृतवान्, किञ्च उक्तवान् यत् - सुग्रीवः ताभ्यां सह सख्यं कर्तुम् इच्छति, अतः तम् अत्र प्रेषितवान् इति। तस्मात् लक्ष्मणः रामस्य आदेशानुसारं हनुमन्तम् उक्तवान् यत् - महात्मनः सुग्रीवस्य गुणान् आवां ज्ञातवन्तौ, आवां तु तेन सुग्रीवेण सह एव साक्षात्कारं कर्तुम् इमं दुर्गं देशम् आगतवन्तौ इति। अस्मिन् श्लोके लक्ष्मणः हनुमता पृष्टस्य "युवाम् इमं दुर्गमं देशं कथम् आगतौ" इति प्रश्नस्यापि उत्तरं दत्तवान्।

**व्याकरणविमर्शः -**

- विदिताः - विद्-धातोः क्तप्रत्यये प्रथमाबहुवचने विदिताः इति रूपम्।
- मार्गावः - मार्ग-धातोः लट्लकारे उत्तमपुरुषद्विवचने मार्गावः इति रूपम्।
- प्लवगेश्वरम् - प्लवगानाम् ईश्वरः प्लवगेश्वरः इति षष्ठीतत्पुरुषसमासः, तं प्लवगेश्वरम्।

**सन्धिकार्यम् -**

- विदिता नौ = विदिताः + नौ। (विसर्गसन्धिः)
- चावाम् = च + आवाम्। (सवर्णदीर्घसन्धिः)

**प्रयोगपरिवर्तनम्** - (हे) विद्वन् नौ महात्मनः सुग्रीवस्य गुणाः विदिताः (अत एव) आवाभ्यां स प्लवगेश्वरः सुग्रीवः एव मार्ग्यते।

**यथा ब्रवीषि हनुमन्सुग्रीववचनादिह।**
**तत्तथा हि करिष्यावो वचनात्तव सत्तम।।३८।।**



**अन्वयः** - (हे ) हनुमन् सुग्रीववचनात् यथा (यत्) त्वम् इह ब्रवीषि, तत् तव वचनात् (आवां)करिष्यावः।

**अन्वयार्थः** - (हे) हनुमन् सुग्रीववचनात् सुग्रीवस्य वचनानुसारं यथा सुग्रीवः सख्यम् इच्छति इति (यत्) त्वम् इह अत्र ब्रवीषि वदसि, तत् सख्यं तव वचनात् वचनानुसारं करिष्यावः सम्पादयिष्यावः।

**सरलार्थः** - लक्ष्मणः हनुमन्तम् उक्तवान् यत् - वानरराजः सुग्रीवः आवाभ्यां सह सख्यम् इच्छति, अतः त्वाम् अत्र प्रेषितवान्। तस्मात् आवाम् अपि तववचनानुसारं तेन सह सख्यं स्वीकर्तुम् इच्छावः इति।

**तात्पर्यार्थः** - हनुमान् रामलक्ष्मणौ उक्तवान् यत् - वानरराजः सुग्रीवः ताभ्यां सह सख्यं कर्तुम् इच्छति, अत एव तम् अत्र तयोः समीपं प्रेषितवान् इति। रामलक्ष्मणौ अपि तेन सुग्रीवेण सह एव साक्षात्कारं कर्तुम् अत्र आगतवन्तौ। अतः तौ वानरेश्वरस्य सुग्रीवस्य सख्यम् अङ्गीकर्तुम् इष्टवन्तौ। तस्मात् एव लक्ष्मणः हनुमन्तम् उक्तवान् यत् - हे हनुमन् त्वम् उक्तवान् यत् सुग्रीवः आवाभ्यां सह सख्यं कर्तुम् इच्छति, तेन तव वचनानुसारं वयं तथैव करिष्यावः इति। अस्मिन् श्लोके लक्ष्मणः हनुमतः सत्तम इति सम्बोधनं कृतवान्। सत्तम इत्यस्य अर्थः हि यः सज्जनेषु अपि श्रेष्ठः इति।

**व्याकरणविमर्शः -**

- ब्रवीषि - ब्रूधातोः लट्लकारे मध्यमपुरुषैकवचने ब्रवीषि इति रूपम्।
- सुग्रीववचनात् - सुग्रीवस्य वचनं सुग्रीववचनम् इति षष्ठीतत्पुरुषसमासः, तस्मात् सुग्रीववचनात्।
- सत्तम – सत्सु (सज्जनेषु) उत्तमः इत्यर्थे सत्-शब्दात् तमप्प्रत्यये सत्तमः इति रूपम्।

**सन्धिकार्यम् -**

- सुग्रीववचनादिह = सुग्रीववचनात् + इह। (जश्त्व-सन्धिः)
- करिष्यावो वचनात् = करिष्यावः + वचनात्। (विसर्गसन्धिः)

**प्रयोगपरिवर्तनम्** - - (हे ) हनुमन् सुग्रीववचनात् यथा (यत्) त्वया इह ब्रूयते, तत् तव वचनात् (आवाभ्यां) करिष्यते।

**तत्तस्य वाक्यं निपुणं निशम्य**
**प्रहृष्टरूपः पवनात्मजः कपिः।**
**मनः समाधाय जयोपपत्तौ**
**सख्यं तदा कर्तुमियेष ताभ्याम्।।३९।।**

**अन्वयः** - प्रहृष्टरूपः पवनात्मजः कपिः तस्य तत् वाक्यं निपुणं निशम्य जयोपपत्तौ मनः समाधाय ताभ्यां सख्यं कर्तुम् इयेष।



**अन्वयार्थः -** प्रहृष्टरूपः आनन्दितः पवनात्मजः मारुतपुत्रः कपिः वानरः तस्य लक्ष्मणस्य तत् वाक्यं वचनं निपुणं कुशलं निशम्य श्रुत्वा जयोपपत्तौ सुग्रीवविजयसिद्धौ मनः चित्तं समाधाय संस्थाप्य ताभ्यां रामलक्ष्मणाभ्यां सख्यं मैत्रीं कर्तुम् सम्पादियतुम् इयेष इष्टवान्।

**सरलार्थः -** रामलक्ष्मणौ अपि सुग्रीवेण सह सख्यं कर्तुम् इच्छति इति लक्ष्मणमुखात् श्रुतवान् हनुमान्। तेन सुग्रीवस्य विजयः अवश्यं भविष्यति इति चिन्तयित्वा स महान् आनन्दितः जातः। तस्मात् स रामलक्ष्मणाभ्यां सह सख्यं कर्तुम् इष्टवान्।

**तात्पर्यार्थः -** रामलक्ष्मणौ अपि सुग्रीवेण सह सख्यं कर्तुम् इच्छतः इति लक्ष्मणमुखात् ज्ञातवान् हनुमान्। रामलक्ष्मणयोः समीपे अलौकिकानि धनुः-खड्ग-बाण-इत्यादीनि शस्त्राणि सन्ति, किञ्च तयोः महत् वीरत्वं वर्तते, यत् साधारणानां नास्ति इत्येतत् सर्वं ज्ञातवान् हनुमान्। अत एव एतादृशौ वीरौ यदि वानरेश्वरस्य सुग्रीवस्य मित्रे भवतः तर्हि वालिना सह युद्धे तयोः सहायेन सुग्रीवस्य अवश्यम् एव विजयः भविष्यति इति निश्चितवान् सः। तस्मात् स मारुतपुत्रः हनुमान् तद्विषये गूढतया चिन्तयित्वा अतीव आनन्दितः जातः। अत एव स रामलक्ष्मणाभ्यां सह सख्यं कर्तुं मतिं कृतवान्। प्रस्तुतेन श्लोकेन हनुमान् दूतत्वेन राज्ञः सर्वदा हिताकाङ्क्षी एव इति ज्ञायते। तस्मात् स आदौ राज्ञः सुग्रीवस्य विजयः केन प्रकारेण भविष्यति इति चिन्तितवान्।

**व्याकरणविमर्शः -**

- निशम्य – निपूर्वकात् शम्-धातोः ल्यप्प्रत्यये निशम्य इति रूपम्।
- प्रहृष्टरूपः - प्रहृष्टं रूपं यस्य स प्रहृष्टरूपः इति बहुव्रीहिसमासः।
- समाधाय – सम्-पूर्वकात् आपूर्वकात् च धारणार्थकात् धाधातोः ल्यप्प्रत्यये समाधाय इति रूपम्।
- जयोपपत्तौ - जयस्य उपपत्तिः (सिद्धिः) जयोपपत्तिः इति षष्ठीतत्पुरुषसमासः, तस्यां जयोपपत्तौ।
- इयेष – इष्-धातोः लिटि प्रथमपुरुषैकवचने इयेष इति रूपम्।

**प्रयोगपरिवर्तनम् -** प्रहृष्टरूपेण पवनात्मजेन कपिना तस्य तत् वाक्यं निपुणं निशम्य जयोपपत्तौ मनः समाधाय ताभ्यां सख्यं कर्तुम् ईषे।

**छन्दःपरिचयः -** अस्मिन् श्लोके उपजाति-च्छन्दः अस्ति। उपजातिच्छन्दसि प्रत्येकस्मिन् पादे एकादश अक्षराणि भवन्ति। एवं चत्वारः पादाः एकस्मिन् श्लोके वर्तन्ते। तेन साकल्येन सम्पूर्णे श्लोके चतुश्चत्वारिंशत् अक्षराणि भवन्ति।



## पाठगतप्रश्नाः

१) सौमित्रिः कम् अभ्यभाषत।

२) सौमित्रिः कीदृशः आसीत्।



३) रामलक्ष्मणाभ्यां कस्य गुणाः विदिताः।

४) सुग्रीवं कौ मार्गतः।

५) हनुमान् कुत्र मनः समाधत्तवान्।

६) हनुमान् किं कर्तुम् इयेष।

७) तत्तस्य वाक्यं निपुणं निशम्य.......इत्यादिश्लोके किं छन्दः अस्ति।

८) अभ्यभाषत वाक्यज्ञो वाक्यज्ञं पवनात्मजम् - इत्यत्र वाक्यज्ञः इत्यनेन कः निर्दिष्टः।

क)लक्ष्मणः ख)हनुमान्

ग)रामः घ)सुग्रीवः

९) हनुमता किं शास्त्रं बहुधा श्रुतम् आसीत्।

क)न्यायशास्त्रम् ख)व्याकरणशास्त्रम्

ग)ज्योतिश्शास्त्रम् घ)शिक्षाशास्त्रम्

१०) तमेव चावां मार्गावः सुग्रीवं प्लवगेश्वरम् - इति कस्य उक्तिः।

क)रामस्य ख)हनुमतः

ग)लक्ष्मणस्य घ)वालिनः

११) तत्तथा हि करिष्यावो वचनात्तव सत्तम – इत्यत्र सत्तम इत्यनेन कः सम्बोधितः।

क)रामः ख)हनुमान्

ग)लक्ष्मणः घ)सुग्रीवः

१२) मनः समाधाय जयोपपत्तौ सख्यं तदा कर्तुम् इयेष ताभ्याम् इत्यत्र हनुमान् कस्य जयोपपत्तौ मनः समाधत्तवान् इति उक्तम्।

क)रामस्य ख)वालिनः

ग)रावणस्य घ)सुग्रीवस्य

१३) क-स्तम्भेन सह ख-स्तम्भं मेलयत -

| **क-स्तम्भः** | **ख-स्तम्भः** |
| --- | --- |
| १. प्लवगेश्वरः | क. अन्विषावः |
| २. मार्गावः | ख.सम्पादयिष्यावः |
| ३. ब्रवीषि | ग. सुग्रीवः |
| ४. करिष्यावः | घ. इष्टवान् |
| ५. इयेष | ङ. आत्थ |



## पाठसारः

भिक्षुरूपधारिणः हनुमतः हृदयहर्षिणीं वाचं श्रुत्वा श्रीरामः अत्यन्तः आनन्दितो जातः। तस्मात् स पार्श्वे स्थितं भ्रातरम् उद्दिश्य हनुमतः पाण्डित्यस्य बहुप्रशंसां कृतवान्। हनुमान् सुग्रीवस्य विषये तौ प्रति उक्त्वा सुग्रीवसचिवत्वेन स्वपरिचयं प्रदत्तवान्। ततः कथितवान् यत् सुग्रीवः ताभ्यां सह सख्यम् इच्छति, अत एव तम् अत्र प्रेषितवान् इति। तौ भ्रातरौ तु सुग्रीवेण सह एव साक्षात्कारं कर्तुं तत्र गतवन्तौ। अतः तौ तत् वाक्यं श्रुत्वा आनन्दितौ जातौ। ततः वाक्यतात्पर्यज्ञः वाग्मी लक्ष्मणः रामादेशानुसारं वाक्यज्ञं हनुमन्तं उक्तवान् यत् - आवां महात्मनः वानरराजस्य सुग्रीवस्य गुणानां विषये जानीवः, आवां तु तं सुग्रीवम् एव अन्विषन्तौ अत्र आगतौ इति।

सुग्रीवः रामलक्ष्मणाभ्यां सह सख्यम् इच्छति इति यत् हनुमता उक्तं, तदनुसारेण एव लक्ष्मणः सुग्रीवस्य सख्यं स्वीकर्तुम् इष्टवान्। तत् श्रुत्वा च हनुमान् चिन्तितवान् यत् एतादृशौ अलौकिकशस्त्रधरौ वीरौ यदि सुग्रीवस्य बन्धू स्याताम्, तर्हि वालिना सह युद्धे अवश्यम् एव सुग्रीवस्य जयः भविष्यति इति। तस्मात् स्वराज्ञः विजयविषये चिन्तयतः तस्य महान् आनन्दः जातः। सः अपि ताभ्यां सह सख्यं कर्तुम् इच्छुः जातः इति अस्य पाठस्य सारः।



## किमधिगतम्

१) यस्य सहायेन कार्यं सेत्स्यति, तेन सह अवश्यं सख्यं कर्तव्यम्।

२) गुणान् सम्यक् ज्ञात्वा एव अपरिचितेन सह मैत्री स्थापनीया।

३) अन्यत् किमपि अचिन्तयित्वा सचिवेन आदौ राज्ञः विजयस्य विषये एव चिन्तनीयम्।



## पाठान्तप्रश्नाः

१) लक्ष्मणः हनुमन्तं किम् उक्तवान् इति सप्रसङ्गं आलोचयत।

२) रामलक्ष्मणौ सुग्रीवेण सह सख्यं करिष्यति इति श्रवणान्तरं हनुमान् कथम् आनन्दितः जातः।

३) तत्तस्य वाक्यं निपुणं निशम्य.......इत्यादिश्लोकं व्याख्यात।

## १५.३) सन्दर्भसूचिः -

श्रीवाल्मीकिमहामुनिप्रणीतं रामायणम्। (रामप्रणीत-रामयणातिलक, शिवसहायप्रणीत-रामायणशिरोमणि, गोविन्दराजप्रणीत-रामायणभूषणेति टीकात्रयेणोपस्कृतम् तच्च कट्टिभिः श्रीनिवासशास्त्रिभिः संशोधितपाठान्तरैः टिप्पण्यादिभिश्च समलंकृतम् तथा सातडिमुखोपाध्यायशर्मणा



विनिर्मिता विशदभूमिकया श्लोकानुक्रमण्या च सनाथीकृतम्।) २००६। प्रकाशकः - प्रो.वेम्पटि कुटुम्ब शास्त्री। प्रकाशनम्- राष्ट्रिय-संस्कृत-संस्थानम्।



## पाठगतप्रश्नानामुत्तराणि

१) सुग्रीवसचिवं पवनात्मजं हनुमन्तम्।

२) वाक्यज्ञः।

३) महात्मनः सुग्रीवस्य।

४) रामलक्ष्मणौ।

५) जयोपपत्तौ।

६) रामलक्ष्मणाभ्यां सह सख्यम्।

७) उपजातिच्छन्दः।

८) क)

९) ख)

१०) ग)

११) ख)

१२) घ)

१३) १-ग, २-क, ३-ङ, ४-ख, ५-घ।

॥ इति पञ्चदशः पाठः ॥



# कर्णभारम्

## भूमिका

काव्यं हि तादृशं कविकौशलं येन कवयः साधारणविषयान् अपि असाधारणत्वेन प्रतिपाद्य सहृदयानां चेतःसु अनुपमम् आनन्दं जनयन्ति। श्रव्यदृश्यभेदेन काव्यं द्विविधम्। दृश्यकाव्येषु अन्यतमं तावत् नाटकम्। नटाः अभिनयेन इदं प्रदर्शयन्ति। तत् नाटकं विलोकनेन सर्वेषां मनसि अनायासेन साहित्यरसस्य उदयः भवति। नाटकम् अभिनीयते इति कारणात् तत् पठित्वा पाठकाः मनसि साक्षात् नाटकस्य चित्रम् एव पश्यन्ति। नाटकस्य दर्शनेन तु पठनस्य क्लेशं विना एव आनन्दः अनुभूयते इति कारणात् काव्येषु नाटकम् अत्यन्तं प्रसिद्धम्। तस्मात् उच्यते - काव्येषु नाटकं रम्यम् इति।

नाटकेषु भासस्य नाटकानि अत्यन्तं प्रसिद्धानि। कर्णभारमिति नाटकं महाभारतम् उपजीव्य विरचितम् इति कारणात् अस्मात् नाटकात् महाभारतस्य कथा ज्ञायते। अनेन नाटकेन कर्णस्य त्यागमाहात्म्यं द्योत्यते, स्वस्य जीवनसङ्कटं जानन् अपि कर्णः स्वस्य कवचकुण्डले ब्राह्मणरूपाय इन्द्राय सहासं दत्तवान्। कर्णस्य अयं त्यागः आबहोः कालात् प्रसिद्धः। एतादृशः त्यागः सर्वेषां मानवानां कृते सर्वदा शिक्षणीयः विषयः। किञ्च, गुरुप्रसादं विना शिक्षा कार्यकाले न सफला भवति इत्यपि जामदग्न्यवृत्तान्तात् ज्ञायते। अतः अस्मात् नाटकात् बहु नीतिशिक्षाविषयकः बोधः जायते। नाटकम् इदं लघुकायम् अस्ति इति कारणात् बालकानां पठनाय सौकर्यं भविष्यति। किञ्च गभीरतया व्याकरणकोषादिज्ञानपूर्वकं च नाटकम् इदम् अध्येतुं शक्यते।

अस्य पाठस्य पठनेन महाभारतस्थं कर्णस्य रमणीयं वृत्तान्तं जानीयात् अध्येता। नीटकशैल्या कथं स वृत्तान्तः अलोकसामान्यतया कविना उपन्यस्त इति सुबोधो भवति। भासस्य सरला शैली अत्र रमणीया एवास्ति। नाटकस्यास्याध्ययनेन छन्दसां व्यवहारः कथं कृतः कविना इति ज्ञात्वा नाटकात् कथं नीतिशिक्षा लभ्यते इति ज्ञानाय इदं नाटकम् अतीव उपयोगि वर्तते।

# १६

# कर्णस्य परितापः

## प्रस्तावना

**नाट्यकारपरिचयः** - महाकविः भासः संस्कृतदृश्यकाव्यरचनासु प्राचीनतमानाम् अन्यतमः। तस्य नाटकानि संस्कृतसाहित्ये प्रसिद्धानि। वस्तुतः संस्कृतसाहित्यजगति नाटकस्य कृते एव भासः अत्यन्तं प्रसिद्धः। तेन त्रयोदश नाटकानि विरचितानि। तानि हि - १.प्रतिज्ञायौगन्धरायणम्, २.अविमारकम्, ३.स्वप्नवासवदत्तम्, ४.प्रतिमानाटकम्, ५.मध्यमव्यायोगः, ६.पञ्चरात्रः, ७.अभिषेकः, ८.दूतवाक्यम् ९.दूतघटोत्कचम्, १०.कर्णभारम्, ११. ऊरुभङ्गम् १२.बालचरितम् १३.चारुदत्तम् चेति। संस्कृतवाङ्मये कविभिः कालस्य देशस्य च अनुल्लेखात् सर्वेषामिव भासस्य कालविषये देशविषये च अपि विदुषां वैमत्यं विद्यते। तथापि भासस्य कालः क्रिस्तपूर्वाब्दचतुर्थशताब्दीतः क्रिस्तपूर्वाब्दचतुर्थशताब्द्यभ्यन्तरे स्वीकर्तुं शक्यते। भासस्य नाटकानां मातृताः केरलदेशे प्राप्ताः इति कारणात् केचन भासं दक्षिणभारतीयं मन्यन्ते। भासकृतिषु उत्तरभारतस्य स्थानानाम् अधिकतया वर्णनात् केचन च भासम् उत्तरभारतीयं मन्यन्ते। परन्तु इदानीमपि भासस्य देशः दृढतया न निर्णीतः।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- संस्कृतनाटके प्रयुक्तान् पारिभाषिकशब्दान् ज्ञास्यति।
- कर्णभारमिति नाटकस्य पात्राणि परिचिनुयात्।
- चिराचरितं नाटकस्य मङ्गलं जानीयात्।
- कर्णस्य कदा अर्जुनं प्रति प्रस्थितः इति ज्ञास्यति।
- केषाञ्चित् कठिनशब्दानाम् अमरकोषं ज्ञातुं शक्ष्यति।
- केषाञ्चित् विशिष्टानां धातूनां रूपस्य प्रकृति-प्रत्ययान् ज्ञास्यति।



## १६.१) नाटकपरिचितिः

### १६.१.१) नाटके प्रयुक्तानां पारिभाषिकशब्दानां परिचयः

**नान्दी -**

**आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।**
**देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥**
**माङ्गल्यशङ्खचक्राब्जकोककैरवशंसिनी।**
**पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत॥**

**अर्थः** - यत्र देवद्विजनृपादीनाम् आशीर्वचनसंयुक्ता स्तुतिः भवति सा नान्दी इति अभिधीयते। द्वादशभिः अष्टाभिः वा पदैः शङ्ख-चक्र-पद्मादि-मङ्गलवाचकशब्दैः नान्दी भवति। नान्दी नाटकात् प्राग् उच्चार्यते।

## आमुखम् -

**नटो विदुषको वापि पारिपार्श्विक एव वा।**
**सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥**
**चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।**
**आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा॥**

**अर्थः** - यत्र नटः विदूषकः अन्यः वा कश्चित् अभिनेता सूत्रधारेण सह नाटकीयकथाविषये वार्तालापं कुरुते तदा तत् आमुखम् इति उच्यते। तत् च प्रस्तावना इति नाम्ना अपि कथ्यते।

**सूत्रधारः -**

**आसूत्रयन् गुणान् नेतुः कवेरपि च वस्तुना।**
**रङ्गप्रसाधनप्रौढः सूत्रधार इवोदितः॥**
**नाट्यस्योपकरणादीनि सूत्रमित्यभिधीयते।**
**सूत्रं धारयतीत्यर्थे सूत्रधारो मतो बुधैः॥**

**अर्थः** - यः रङ्गप्रसाधनेषु प्रौढः नायकस्य कवेर्वा गुणान् वर्णयति स सूत्रधारः इति अभिधीयते। नाटकस्य उपकरणादीनि सूत्रम् इत्युच्यते, तत् सूत्रम् यः धारयति स सूत्रधार इति बुधैः कथ्यते।

**नेपथ्यम्** - 'कुशीलवकुटुम्बस्य गृहं नेपथ्यमुच्यते।' कुशीलवाः यत्र अन्तराले तिष्ठन्ति, तत् नेपथ्यम् उच्यते।

**स्वगतम्** - 'अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्।' यत् सर्वैः श्रवणयोग्यं नास्ति, तत् स्वगतम् इत्युच्यते।

**प्रकाशम्** - 'सर्वश्राव्यं प्रकाशं स्यात्।' यत् सर्वैः श्रवणयोग्यम् तत् प्रकाशम् इत्युच्यते।



### १६.१.२) कर्णभारम् इति नाटकस्य पात्राणां परिचयः

कर्णभारम् इति नाटकस्य वृत्तं महाभारतम् उपजीव्य विरचितम्। महाभारतस्य शान्तिपर्वणि सभापर्वणि अयं प्रसङ्गः। कर्णः इन्द्राय कवचकुण्डले प्रददाति। तेन च इन्द्रात् मायाविशक्तिं प्राप्नोति। तत्र एवं वृत्तजातं वर्णितम्। महाभारतम् उपजीव्य विरचितत्वात् महाभारतस्य एव कानिचन पात्राणि अत्र स्वीकृतानि।

- कर्णः - सूर्यपुत्रः कर्णः अङ्गेश्वरस्य कौरवसेनापतिः।
- शल्यः - शल्यराजः कर्णस्य सारथिः।
- भटः- सूचकः।
- शक्रः - ब्राह्मणरूपधारी इन्द्रः।
- देवदूतः - इन्द्रस्य सन्देशवाहकः।



## पाठगतप्रश्नाः-१

१. महाकविः भासः किमर्थं प्रसिद्धः?
२. किं काव्यम् आश्रित्य इदं नाटकं रचितम्?
३. नेपथ्यं नाम किम्?
४. कर्णस्य सारथेः किम् नाम आसीत्?
५. नाटके अस्मिन् कति पात्राणि सन्ति?

---

## १६.२) नाटकस्य मूलपाठम् साम्प्रतम् अवगच्छाम

**प्रथमोऽङ्कः**

**(नान्द्यन्ते ततः प्रविशति सूत्रधारः)**

**सूत्रधारः —**

**नरमृगपतिवर्ष्मालोकनभ्रान्तनारी-**
**नरदनुजसुपर्वव्रातपातालक्लोकः।**
**करजकुलिशपालीभिन्नदैत्येन्द्रवक्षाः**
**सुररिपुबलहन्ता श्रीधरोऽस्तु श्रिये वः॥१॥**



## व्याख्या

**श्लोकान्वयः** - नरमृगपतिवर्ष्मालोकन-भ्रान्त-नारी-नर-दनुज-सुपर्व-व्रात-पाताल-लोकः करज-कुलिश-पालीभिन्नदैत्येन्द्रवक्षाः सुररिपुबलहन्ता श्रीधरः वः श्रिये अस्तु॥१॥

**व्याख्या** - नरमृगपतिवर्ष्मालोकनभ्रान्तनारीनरदनुजसुपर्वव्रातपातालललोकः - मृगाणां पतिः मृगपतिः सिंहः। नरः मनुष्यः। नर एव मृगपतिः नरमृगपतिः नृसिंहः, नृसिंहावतारः इति यावत्। तस्य च यद् वर्ष्म विग्रहः शरीरं तस्य आलोकनेन दर्शनेन भ्रान्ताः चकिताः नारीणां मानवस्त्रीणाम्, नराणां मानवानाम्, दनुजानां दानवानां सुपर्वणां देवानां व्राताः समूहाः पातालललोकाश्च येन सः। करजकुलिशपालिभिन्नदैत्येन्द्रवक्षाः - करे जातः करजः नखः, स एव कुलिशः वज्रः, तस्य पाल्या अग्रभागेन, भिन्नं विदीर्णम्, दैत्येन्द्रस्य हिरण्यकशिपोः, वक्षः उरःस्थलं येन सः। सुररिपुबलहन्ता - सुररिपूणां दैत्यानां रक्षसाम्, बलं सैन्यम् हन्ति इति दानवसैन्यविनाशकः। श्रीधरः भगवान् नृसिंहः, वः युष्माकं नाटकदर्शकानां श्रोतृणां च श्रिये कल्याणाय अस्तु भवतु। मालिनीवृत्तम् ॥१॥

**सरलार्थः** - नान्दीपाठात् अनन्तरं सूत्रधारः मञ्चं प्रविश्य श्लोकम् इमं कथयति। अस्मिन् श्लोके सूत्रधारः भगवतः नृसिंहस्य स्तुतिं कुर्वन् सर्वेषां मङ्गलविधानाय प्रार्थयति। स कथयति यत् - यं नरसिंहम् अवलोक्य नराः नार्यः राक्षसाः देवाः पातालाधिवासिनः च चकिताः जाताः, यः च वज्रसदृशानां नखानाम् अग्रभागेन हिरण्यकशिपोः वक्षःस्थलं विदीर्णवान्, दानवसैन्यानां विनाशकः स श्रीधरः अस्माकं मङ्गलं विदधातु इति प्रार्थना।

**व्याकरणविमर्शः -**

- दनुजः - असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः इत्यमरः।
- सुपर्वा - अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः। सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः॥ इत्यमरः।
- रिपुः -रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः इत्यमरः।

## १६.३) मूलपाठम् अवगच्छाम

**एवमार्यमिश्रान् विज्ञापयामि। (परिक्रम्य, कर्णं दत्त्वा।) अये किं न खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते। अङ्ग! पश्यामि।**

**(नेपथ्ये)**

**भो भो! निवेद्यतां निवेद्यतां महाराजायाङ्गेश्वराय।**

**सूत्रधारः — भवतु। विज्ञातम्।**

**संग्रामे तुमुले जाते कर्णाय कलिताञ्जलिः।**
**निवेदयति सम्भ्रान्तो भृत्यो दुर्योधनाज्ञया॥२॥**

**(निष्क्रान्तः)**



## व्याख्या

**व्याख्या** - एवम् आर्यमिश्रान् - आर्याः कुलशीलादिगुणयुक्ताः सभ्याः, ते च मिश्राः पूज्याः, तान्। विज्ञापयामि निवेदयामि।

**श्लोकान्वयः** - संग्रामे तुमुले जाते सम्भ्रान्तः भृत्यः दुर्योधनाज्ञया कलिताञ्जलिः सन् कर्णाय निवेदयति॥२॥

**व्याख्या** - संग्रामे युद्धे, तुमुले घोरे महाभयङ्करे, जाते सम्पन्ने, सम्भ्रान्तः व्याकुलचित्तः, भृत्यः सेवकः, दुर्योधनाज्ञया दुर्योधनस्य आज्ञया आदेशेन, कलिताञ्जलिः - कलितः विहितः सम्पुटितः, अञ्जलिः करसम्पुटः, येन सः। कर्णाय अङ्गराजाय, निवेदयति विज्ञापयति। भयङ्करः संग्रामो भवति इत्यर्थः। अनुष्टुप् छन्दः॥२॥

**सरलार्थः** - श्लोककथनात् अनन्तरं सूत्रधारः सभ्यान् पूज्यान् च दर्शकान् किञ्चित् निवेदयितुम् इच्छति। तदा कश्चित् शब्दः तेन श्रुतः। तत्र केनचित् उच्यते यत् अङ्गाधिपतिम् कर्णं निवेदयतु इति।

तत् श्रुत्वा सूत्रधारः कथयति- अस्तु, इदानीं मया अवगतम् इति। किं तेन अवगतम् इति चेत् उच्यते श्लोकेन- दुर्योधनस्य आज्ञया व्याकुलचित्तः सेवकः हस्तौ सम्पुटीकृत्य महाभयङ्करयुद्धविषये कर्णं सूचयति इति। एतद् उक्त्वा सूत्रधारः मञ्चात् निष्क्रामति।

**व्याकरणविमर्शः -**

- परिक्रम्य – परि-√क्रम + क्त्वा (ल्यप्) -प्रत्यये। (क्रमु पादविक्षेपे)
- निवेद्यताम् - नि-√विद्+ भावे (य) + लोटि प्रथमपुरुषैकवचने। (विद ज्ञाने)
- विज्ञातम् - वि√ज्ञा+कर्मणि क्तप्रत्यये। (ज्ञा अवबोधने)
- निवेदयति - नि√विद् + णिच् + प्रथमपुरुषैकवचने। (विद ज्ञाने)
- भृत्यः - भृत्ये दासेरदासेयदासगोप्यकचेटकाः इत्यमरः।



## पाठगतप्रश्नाः-२

६. सूत्रधारः मङ्गलश्लोकेन कस्मै नमस्करोति?

७. के आर्याः।

८. भृत्यः कदा किं कर्णाय निवेदयति।

## १६.४) मूलपाठम् अवगच्छाम

[प्रस्तावना]

(ततः प्रविशति भटः।)

**भटः— भो भो! निवेद्यतां निवेद्यतां महाराजाङ्गेश्वराय युद्धकाल उपस्थित इति।**

**करितुरगरथस्थैः पार्थकेतोः पुरस्तात्**
**मुदितनृपतिसिंहैः सिंहनादः कृतोऽद्य।**
**त्वरितमरिनिनादैर्दुस्सहालोकवीरः**
**समरमधिगतार्थः प्रस्थितो नागकेतुः॥३॥**

## व्याख्या

**श्लोकान्वयः** - पार्थकेतोः पुरस्तात् करितुरगरथस्थैः मुदितनृपतिसिंहैः अद्य सिंहनादः कृतः अतः अरिनिनादैः दुःसहालोकवीरः अधिगतार्थः नागकेतुः त्वरितं समरं प्रस्थितः॥३॥

**व्याख्या** - करीति- पार्थकेतोः पृथायाः पुत्रः पार्थः अर्जुनः, तस्य केतुः ध्वजः, तस्य अर्जुनध्वजस्य। पुरस्तात् अग्रे, करितुरगरथस्थैः - करयः हस्तिनः तुरगः अश्वाः रथाश्च तेषु तिष्ठन्ति इति तथाभूताः, तैः। मुदितनृपतिसिंहैः - मुदिताः हर्षयुक्ताः ये नुपतिसिंहाः राजशार्दूलाः, तैः। अद्य सिंहनादः सिंहशब्दः इव गर्जनम् इत्यर्थः कृतः। अतः अरिनिनादैः शत्रुगर्जनशब्दैः, दुःसहालोकवीरः- दुःसहः सोढुम् अशक्यः, आलोकः तेजोविशेषः, यस्य वीरस्य सः, असहनशीलपराक्रमः। अधिगतार्थः अधिगतः परिज्ञातः अर्थः प्रयोजनमं येन सः, विज्ञातार्थः। नागकेतुः नागः हस्ती, केतौ ध्वजे, यस्य सः हस्तिचिह्नध्वजः दुर्योधनः इत्यर्थः। त्वरितं वेगेन, समरम् युद्धस्थानम्, प्रस्थितः प्रस्थानं कृतवान्। मालिनीवृत्तम्॥३॥

**सरलार्थः** - सूत्रधारस्य गमनात् अनन्तरं मञ्चम् प्रविशति भटः। प्रविश्य स कथयति यत् युद्धकालः समुपस्थितः इति वार्तां महाराजाय कर्णाय ज्ञापयतु इति। ततः भटः कथयति यत् युद्धे दुर्योधनः अर्जुनम् उद्दिश्य प्रयाणं कृतवान्। किमर्थं प्रयाणं कृतवान् इति चेत् - अर्जुनरथस्य समीपे स्थिताः राजानः हर्षयुक्ताः सन्तः युद्धार्थं महागर्जनं कुर्वन्ति इति शत्रुगर्जनशब्दम् आकर्ण्य तद्गर्जनं सोढुं असमर्थः दुर्योधनः युद्धाय प्रस्थानं कृतवान् इति।

**व्याकरणविमर्शः -**

- उपस्थितः - उप-√स्था + कर्तरि क्तप्रत्यये। (ष्ठा गतिनिवृत्तौ)
- प्रस्थितः - प्र-√स्था+ कर्तरि क्तप्रत्यये। (ष्ठा गतिनिवृत्तौ)
- करी - मतङ्गजो गजो नागः कुञ्जरो वारणः करी इत्यमरः।
- तुरगः - घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः इत्यमरः।
- सिंहः - सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः इत्यमरः।



## १६.५) मूलपाठम् अवगच्छाम

**(परिक्रम्य विलोक्य) अये अङ्गमहाराजः समरपरिच्छदपरिवृतः शल्यराजेन सह स्वभवनान्निष्क्रम्येत एवाभिवर्तते। भोः किं नु खलु युद्धोत्सवप्रमुखस्य दृष्टपराक्रमस्याभूतपूर्वो हृदयपरितापः।**

**एष हि —**

**अत्युग्रदीप्तिविशदः समरेऽग्रगण्यः**
**शौर्ये च सम्प्रति सशोकमुपैति धीमान्।**
**प्राप्ते निदाघसमये घनराशिरुद्धः**
**सूर्यः स्वभावरुचिमानिव भाति कर्णः॥४॥**

**यावदपसर्पामि।**

**(निष्क्रान्तः)**

## व्याख्या

**व्याख्या** - अये हे अङ्गमहाराजः अङ्गेश्वराधिपतिः कर्णः, समरपरिच्छदपरिवृतः - समरस्य युद्धस्य, परिच्छदेन वस्त्रेण, परिवृतः शोभितः, युद्धवेशधारी इत्यर्थः। शल्यराजेन सह स्वभवनात् निजगृहात्, निष्क्रम्य निर्गमनं कृत्वा, इतः एव अभिवर्तते अत्रैव आगच्छति इत्यर्थः। भोः किं न खलु युद्धोत्सवप्रमुखस्य युद्धः एव उत्सवः युद्धोत्सवः, तस्य प्रमुखः सम्मुखे स्थितः सेनापतिः, तस्य। दृष्टपराक्रमस्य दृष्टः ज्ञातः पराक्रमः वीरता यस्य, तस्य। अभूतपूर्वः न पूर्वं भूतः जातः इति अभूतपूर्वः नूतनः, हृदयपरितापः हृदयस्य मनसः परितापः सन्तापः।

**श्लोकान्वयः** - अत्युग्रदीप्तिविशदः समरे शौर्ये च अग्रगण्यः धीमान् सम्प्रति सशोकम् उपैति। निदाघसमये प्राप्ते घनराशिरुद्धः स्वभावरुचिमान् सूर्यः इव अयम् कर्णः भाति॥४॥

**व्याख्या** - अत्युग्रेति- अत्युग्रदीप्तिविशदः अत्युग्रा महोत्कटा च असौ दीप्तिः कान्तिः, अत्युग्रदीप्तिः, तया विशदः प्रद्योतितः। समरे युद्धे, शौर्ये पराक्रमे, च अग्रगण्यः अग्रेसरः, धीमान् बुद्धिमान्, सम्प्रति युद्धकाले सशोकं शोकसहितम् उपैति आगच्छति। निदाघसमये ग्रीष्मकाले, घनराशिरुद्धः - घनानां मेघानाम्, राशिभिः समूहैः, रुद्धः समाच्छादितः। स्वभावरुचिमान् स्वभावतः निसर्गतः रुचिः अस्ति अस्मिन् इति स्वभावरुचिमान् सहजकान्तिमान् इत्यर्थः। सूर्यः रविः, इव यथा, अयं कर्णः भाति शोभते। यथा ग्रीष्मकाले सहजप्रकाशितः सूर्यः मेघाच्छन्नतया मलिनकान्तिः जायते तथा अयं कर्णः अपि युद्धकाले शोकेन मलिनकान्तिः सन् प्रभाहीनः प्रतीयते इत्यर्थः। वसन्ततिलकावृत्तम्॥४॥

**सरलार्थः** - ततः भटः मञ्चं परिक्रम्य, दूरे किञ्चित् अवलोक्य कथयति - महाराजः कर्णः युद्धस्य परिधानं धृत्वा शल्यराजेन सह निजगृहात् बहिः आगम्य युद्धस्थानम् एव आगच्छति। यद्यपि स योद्धृषु प्रमुखः तथापि तस्य मनसि अदृष्टपूर्वः परितापः दृश्यते। एतद् अत्यन्तम् आश्चर्यकरम् इति। इत्युक्त्वा कर्णः वदति - अपसर्पामि दूरं गच्छामि।



शोकग्रस्तः कर्णः कीदृशः दृश्यते इति वर्णयति भटः - कर्णः अत्यन्तदीप्तिमान्, युद्धे वीरतायां च अग्रगण्यः, बुद्धिमान् अपि। परन्तु स इदानीं शोकेन आच्छादितः। यथा ग्रीष्मकाले सूर्यः मेघराशिभिः आच्छादितः न शोभते, तथैव स्वभावतः दीप्तिमान् शौर्यवान् अपि कर्णः युद्धसमये शोकेन आच्छादितः सन् न शोभते इत्यर्थः। इति उक्त्वा कर्णः मञ्चात् अपसरति।

**व्याकरणविमर्शः -**

- विलोक्य – वि-√लोकि+ क्त्वा (ल्यप्)- प्रत्यये। (लोकृ दर्शने)
- हृदयम् - चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः इत्यमरः।
- समरः - अस्त्रीयां समरानीकरणाः कलहविग्रहौ इत्यमरः।
- अपसर्पामि - अप-√सृप् + लटि प्रथमपुरुषैकवचने। (सृप गतौ)
- भाति - √भा + लटि प्रथमपुरुषैकवचने। (भा दीप्तौ)
- निदाघः - ग्रीष्म उष्मकः। निदाघ उष्णोपगम उष्ण उष्मागमस्तपः इत्यमरः।

## १६.६) मूलपाठम् अवगच्छाम

**(ततः प्रविशति यथानिर्दिष्टः कर्णः शल्यश्च। )**

**कर्णः -**

**मा तावन्मम शरमार्गलक्षभूता**
**सम्प्राप्ताः क्षितिपतयः सजीवशेषाः।**
**कर्तव्यं रणशिरसि प्रियं कुरूणां**
**द्रष्टव्यो यदि स भवेद्धनञ्जयो मे॥५॥**

## व्याख्या

**श्लोकान्वयः** - मम शरमार्गलक्षभूताः क्षितिपतयः तावत् मा सजीवशेषाः सम्प्राप्ताः। (अद्य) यदि सः धनञ्जयः मे द्रष्टव्यः भवेत् (तर्हि मया) रणशिरसि कुरूणाम् प्रियं कर्तव्यम् ॥५॥

**व्याख्या** - मम कर्णस्य, शरमार्गलक्षभूताः - शराणाम् बाणानां मार्गः गमनपथः शरमार्गः, तत्र लक्षभूताः लक्ष्यत्वेन संस्थिताः, क्षितिपतयः राजानः, तावत् मा न, सजीवशेषाः जीवेन सहिताः सजीवाः, तैः शेषाः, जीविताः इत्यर्थः, सम्प्राप्ताः उपस्थिताः। अद्य युद्धदिवसे यदि सः धनञ्जयः अर्जुनः, मे मम कर्णस्य, द्रष्टव्यः दर्शनयोग्यः भवेत्, (तर्हि) रणशिरसि युद्धभूमौ, कुरूणां दुर्योधनादीनां कुरुवंशीयानाम्, प्रियम् इष्टम्, कर्तव्यं सम्पादनीयम्। अद्य युद्धे अहम् अर्जुनम् विजित्य कौरवाणां प्रियं साधयामि इत्यर्थः। प्रहर्षिणीवृत्तम् ॥५॥

**सरलार्थः** - ततः प्रविशति सारथिना शल्येन सह कर्णः। कर्णः स्वस्य वीरत्वं स्मृत्वा कथयति यत् मया सह ये राजानः युद्धं कृतवन्तः ते न जीविताः सन्ति, अर्थात् अहं युद्धे सर्वान् राज्ञः पराजितवान्, हतवान् च। यदि अद्य युद्धे अर्जुनः दृश्यते तर्हि अद्य अहम् अर्जुनं हनिष्यामि, तेन च दुर्योधनादीनां कुरुवंशीयानाम् इष्टं साधयिष्यामि इति।



**व्याकरणविमर्शः -**

- कर्तव्यम् - √कृ + तव्य-प्रत्यये। (डुकृञ् करणे)
- द्रष्टव्यः - √दृश् + तव्य-प्रत्यये। (दृशिर् प्रेक्षणे)



## पाठगतप्रश्नाः-३

९. युद्धवार्तां कर्णाय कः निवेदयति।

१०. नागकेतुः कः।

११. भटः महाराजाय अङ्गेश्वराय किं निवेदयितुं समागतः?

---

## १६.७) मूलपाठम् अवगच्छाम

**शल्यराज! यत्रासावर्जुनस्तत्रैव चोद्यतां मम रथः।**

**शल्यः — बाठम्। (चोदयति)**

**कर्णः — अहो नु खलु।**

**अन्योन्यशस्त्रविनिपातनिकृत्तगात्र-**
**योधाश्ववारणरथेषु महाहवेषु।**
**क्रुद्धान्तकप्रतिमविक्रमिणो ममापि**
**वैधुर्यमापतति चेतसि युद्धकाले॥६॥**

## व्याख्या

**श्लोकान्वयः** - अन्योन्यशस्त्रविनिपातनिकृत्तगात्रयोधाश्ववारणरथेषु महाहवेषु युद्धकाले क्रुद्धान्तकप्रतिमविक्रमिणः मम अपि चेतसि वैधुर्यम् आपतति॥६॥

**व्याख्या** - अन्योन्येति - अन्योन्यशस्त्रविनिपातनिकृत्तगात्रयोधाश्ववारणरथेषु- अन्योन्यं परस्परम्, शस्त्राणाम् आयुधानाम्, विनिपातैः प्रहारैः, निकृत्तगात्राः कर्तितशरीराः, योधाः वीराः, अश्वाः वाजिनः, वारणाः हस्तिनः, रथाः स्यन्दनानि येषु तेषु, महाहवेषु महायुद्धेषु, युद्धकाले समरसमये, क्रुद्धान्तकप्रतिमविक्रमिणः - क्रुद्धः कुपितः च असौ अन्तकः यमः, तेन प्रतिमः तुल्यः विक्रमः पराक्रमः अस्ति यस्य तस्य मम कर्णस्य अपि चेतसि मनसि वैधुर्यं दैन्यम्, आपतति आगच्छति। वसन्ततिलकवृत्तम्॥६॥

**सरलार्थः** - ततः अर्जुनं हन्तुं कर्णः शल्यराजं प्रति कथयति यत् - यत्र अर्जुनः अस्ति तत्र मम रथं नयतु इति। शल्यराजः तथैव करोति। तदा कर्णः युद्धकाले समुपस्थिते शल्यं प्रति पूर्वं कदापि



अननुभूतां वैक्लव्यतां सूचयति। कर्णः कथयति - यः युद्धेषु शस्त्रप्रहारेण शत्रुपक्षीयाणां योद्धॄणां शरीराणि कर्तयति, अश्वान् रथान् हस्तिनः च नाशयति, यस्य च पराक्रमः साक्षात् क्रुधः यमः इव, तादृशस्य वीरस्य अपि कर्णस्य मनसि युद्धसमये सन्तापः भवति इति आश्चर्यकरम्।

**व्याकरणविमर्शः -**

- चोद्यताम् - √चुद + कर्मणि (य) + लोटि प्रथमपुरुषैकवचने। (चुद संचोदने)
- आपतति - आ-√पत् + लटि प्रथमपुरुषैकवचने। (पत्ऌ गतौ)
- चेतस् - चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः इत्यमरः।

## १६.८) मूलपाठम् अवगच्छाम

**भोः कष्टम्।**

**पूर्वं कुन्त्यां समुत्पन्नो राधेय इति विश्रुतः।**
**युधिष्ठिरादयस्ते मे यवीयांसस्तु पाण्डवाः॥७॥**
**अयं स कालः क्रमलब्धशोभनो**
**गुणप्रकर्षो दिवसोऽयमागतः।**
**निरर्थमस्त्रं च मया हि शिक्षितं**
**पुनश्च मातुर्वचनेन वारितः॥८॥**

**भोः शल्यराज ! श्रूयतां ममास्त्रस्य वृत्तान्तः।**

## व्याख्या

**श्लोकान्वयः -** पूर्वं कुन्त्यां समुत्पन्नः राधेयः इति विश्रुतः, युधिष्ठिरादयः पाण्डवाः मे यवीयांसः॥७॥

**व्याख्या -** पूर्वं प्रथमम्, कुन्त्याम् कुन्तिनामधेयायां नार्याम्, समुत्पन्नः जातः, राधेयः राधायाः अपत्यं पुमान् इति राधेयः इति नाम्ना विश्रुतः लोके प्रसिद्धः। युधिष्ठिरादयः युधिष्ठिरः आदिः येषां ते युधिष्ठिरादयः युधिष्ठिरप्रमुखाः पञ्च, पाण्डवाः पाण्डुपुत्राः मे मम कर्णस्य यवीयांसः कनिष्ठाः भ्रातरः सन्ति। एवं जानन् अपि तेषां हननं किं युक्तं भवेदिति दैन्यकारणं व्यज्यते। अनुष्टुप् छन्दः॥७॥

**श्लोकान्वयः -** गुणप्रकर्षः क्रमलब्धशोभनः सः कालः अयम् दिवसः आगतः, हि मया शिक्षितम् अस्त्रं निरर्थं च। पुनः च मातुः वचनेन वारितः॥८॥

**व्याख्या -** अयमिति- गुणप्रकर्षः गुणेन अस्त्रादिनैपुण्यप्रदर्शनद्वारा प्रकर्षः अत्युत्कृष्टः, क्रमलब्धशोभनः क्रमेण दिनक्रमेण लब्धः प्राप्तः शोभनः सुन्दरः स कालः अर्जुनेन सह युद्धार्थम्। अयं प्रवर्तमानः, दिवसः वासरः, आगतः सम्प्राप्तः, हि किन्तु मया कर्णेन शिक्षितम् अभ्यस्तम् अस्त्रं बाणविद्या निरर्थं विफलम्। पुनः च मातुः कुन्त्याः वचनेन वचसा आदेशेन वारितः पाण्डववधनिषिद्धः। वंशस्थवृत्तम्॥८॥



**सरलार्थः** - इदानीं कर्णः स्वस्य विरहकारणं निरूपयन् आह - यत् अहं हि कुन्त्याः ज्येष्ठः पुत्रः, युधिष्ठिरादयः पञ्च पाण्डवाः मम अनुजाः। मातुः आदेशेन मया पाण्डववधः निषिद्धः। तथापि अहं पाण्डवान् हन्तुम् उद्युक्तः। किञ्च, मया बहुदिनेभ्यः प्रतीक्षमाणः स कालः इदानीं समागतः यदा एतत् प्रमाणितं भविष्यति यत् मया अस्त्रविद्या निरर्थं शिक्षिता इति। एवं निगद्य कर्णः स्वस्य अस्त्रवृत्तान्तं शल्याय श्रावयति।

**व्याकरणविमर्शः -**

- विश्रुतः - वि-√श्रु + क्तप्रत्यये। (श्रु श्रवणे)
- शिक्षितम् - √शिक्ष् + क्तप्रत्यये। (शिक्ष विद्योपादाने)
- कालः - कृतान्तो यमुनाभ्राता शमनो यमराड्यमः। कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः।। इत्यमरः।



## पाठगतप्रश्नाः-४

१२. राधेयः कः।

१३. अस्त्रवृत्तान्तं कर्णः कस्मै श्रावयति।

---



## पाठसारः

- नान्दी सूत्रधारः प्रस्तावना नेपथ्यम् इत्यादीनां नाटके बाहुल्येन प्रयुक्तानां शब्दानां परिचयः प्रारम्भे प्रदत्तः अस्ति।
- कर्णभारम् इति नाटकस्य कानिचन वैशिष्ट्यानि आलोचितानि। ततः परं नाटकस्य मूलं पाठम् उद्धृत्य व्याख्यानं कृतम्। तत्रत्यः कथायाः सारः अधस्तात् उपन्यस्तः।
- नान्दीपाठात् अनन्तरं सूत्रधारः रङ्गमञ्चम् आगत्य नरसिंहरूपधारिणः विष्णोः वर्णनेन मङ्गलं कामयते। तथाहि तेन उच्यते- यस्य विष्णोः नृसिंहरूपं दृष्ट्वा नराः राक्षसाः देवाः पातालाधिवासिनः च आश्चर्यचकिताः जाताः, यः च स्वस्य वज्रसमानैः कठिनैः नखैः दैत्यराजस्य हिरण्यकशिपोः हृदयं विदीर्णं चकार, दानवसैन्यानां विनाशकः स विष्णुः युष्माकं मङ्गलं विदधातु इति। तस्मिन् एव समये नेपथ्ये शब्दः श्रूयते - अङ्गदेशाधिपतिं महाराजं कर्णं निवेदय इति। नेपथ्यशब्दं श्रुत्वा सूत्रधारः कथयति- अवगतं यत् दुर्योधनस्य आज्ञया परिचारकः तुमुलं युद्धं भविष्यतीति कर्णाय सूचनां प्रददाति। सूत्रधारः प्रस्थानं करोति। ततः भटः आगत्य अङ्गदेशाधिपतये कर्णाय निवेदयितुम् इच्छति यत् युद्धकालः समुपस्थितः;



अर्जुनस्य ध्वजस्य पुरस्तात् हस्ति-तुरग-रथस्थाः सिंहसदृशाः राजानः सिंहनादं कृतवन्तः। शत्रुपक्षीयाणां दुःसहं सिंहनादम् आकर्ण्य दुर्योधनः युद्धाय प्रस्थितः। तस्मिन् एव समये भटेन युद्धवेषधारी कर्णः सारथिना शल्यराजेन सह निजगृहात् प्रस्थानं कुर्वाणः दृष्टः। परन्तु कर्णस्य मनः सन्तप्तं दृष्टम्। एवम् अवलोक्य भटः वदति यत् - यथा ग्रीष्मकाले मेघमण्डलैः परिव्याप्तः सूर्यः मलिनकान्तिः जायते तथैव समरे शौर्ये च अग्रगण्यः बुद्धिमान् कर्णः युद्धकाले शोकमालिन्येन परिव्याप्तः सन् न शोभते इति। ततः भटः प्रस्थानं करोति।

➢ ततः कर्णः स्वस्य सारथिना शल्यराजेन सह प्रविशति। कर्णः वदति - एवं कदापि नाभवत् यत् मम शरस्य लक्ष्यभूताः राजानः कदापि जीविताः अभवन् इति, अद्य यदि रणे अर्जुनः दृश्यते तर्हि अर्जुनं निहत्य कौरवाणाम् अभीष्टं पूरयिष्यामि। भो शल्यराज, मदीयं रथम् अर्जुनस्य समीपे नयतु इति। ततः कर्णः मनसा चिन्तयति यत् यस्य अतुलशक्तेः तुलना क्रुद्धेन यमराजेन सह भवति, यः च रणाङ्गणे शस्त्रप्रहारेण योद्धॄन् अश्वान् रथान् हस्तिनः च विदीर्णान् करोति, तस्य मे कर्णस्य चेतसि युद्धसमये किमर्थं एतादृशः क्लीबताभावः समुदेति इति। पुनश्च स मनसा कथयति - पूर्वम् अहं कुन्त्यां समुत्पन्नः राधेय इति नाम्ना प्रसिद्धः, युधिष्ठिरादयः पाण्डवाः मे कनिष्ठाः भ्रातरः। पुनश्च सः कालः इदानीं समागतः यस्य अपेक्षा मम आसीत्, परन्तु अस्त्रविद्या या मया शिक्षिता सा निरर्था, पुनश्च कुन्त्या आदेशेन पाण्डववधः निषिद्धः। इति उक्त्वा शल्यराजम् उद्दिश्य तस्य अस्त्रवृत्तान्तं श्रावयति।

##  पाठान्तप्रश्नाः

१. नान्द्याः लक्षणं विशदयत।

२. प्रस्तावना सलक्षणं प्रतिपाद्या।

३. भासस्य पञ्च नाटकानां नामानि लिखत?

४. सूत्रधारः कः। सलक्षणं प्रतिपाद्यताम्।

५. कः किमर्थं च नागकेतुः इत्युच्यते?

६. शोकसन्तः कर्णः कविना केन सह उपमितः?

७. कर्णस्य हृदयपरितापस्य कारणं किम्?

##  पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. नाटकरचनायाः कृते प्रसिद्धः।



२. महाभारतम्।

३. कुशीलवकुटुम्बस्य गृहं नेपथ्यमुच्यते।

४. शल्यः।

५. पञ्च।

**उत्तराणि-२**

६. भगवते नृसिंहाय नमस्करोति।

७. आर्याः कुलशीलादिगुणयुक्ताः सभ्याः।

८. संग्रामे तुमुले जाते कर्णाय निवेदयति यत् भयंकरः संग्रामः प्रवर्तते इति।

**उत्तराणि-३**

९. भृत्यः।

१०. दुर्योधनः।

११. अर्जुनस्य रथसमीपे राजानः हर्षयुक्ताः सन्ति इति दुर्योधनः अर्जुनम् उद्दिश्य प्रयाणं कृतवानिति।

**उत्तराणि-४**

१२. कर्णः।

१३. शल्याय।

॥ इति षोडशः पाठः ॥



# १७

# अस्त्रस्य वृत्तान्तः

## प्रस्तावना

पूर्वपाठे नाटकस्य पारिभाषिकशब्दाः ज्ञाताः। तस्मिन् नान्दी सूत्रधारः नेपथ्यं स्वगतं प्रकाशम् इति केचित् प्रसिद्धाः शब्दाः ज्ञाताः। युद्धस्य वार्तां ज्ञात्वा कर्णः युद्धाय प्रस्थितः। मातुः कुन्त्याः वचने बद्धः, गुरुणा शप्तः कर्णः स्वस्य दुःखम् अन्तः सोढुम् असमर्थः शल्यराजाय निवेदयति। तत्र गुरुणाः कर्णः केन कारणेन शप्तः इति कर्णः स्वमुखेन शल्याय निवेदयति। अयमेव वृत्तान्तः अस्त्रस्य वृत्तान्तः इति कथ्यते।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- कर्णस्य गुरुसमीपं गमनं ज्ञास्यति।
- कर्णः मिथ्या उक्त्वा कथं गुरुसकाशात् अस्त्रविद्याम् अर्जितावन् इति ज्ञास्यति।
- कर्णस्य गुरुः कर्णस्य मिथ्यात्वं ज्ञात्वा कर्णं किं शपति इति अवगच्छेत्।
- केषाञ्चित् कृदन्तरूपाणां प्रकृतिप्रत्ययनिर्णयं कर्तुं शक्ष्यति।
- केषाञ्चित् शब्दानाम् अमरकोषे समानार्थान् शब्दान् ज्ञास्यति।

## १७.१) मूलपाठम् अवगच्छाम

**शल्यः — ममाप्यस्ति कौतूहलमेनं वृत्तान्तं श्रोतुम्।**

**कर्णः — पूर्वमेवाहं जामदग्न्यस्य सकाशं गतवानस्मि।**

**शल्यः — ततस्ततः**

**कर्णः — ततः**

**विद्युल्लताकपिलतुङ्गजटाकलाप-**<br>
**मुद्यत्प्रभावलयिनं परशुं दधानम्।**<br>
**क्षत्रान्तकं मुनिवरं भृगुवंशकेतुं**<br>
**गत्वा प्रणम्य निकटे निभृतः स्थितोऽस्मि॥१॥**



## व्याख्या

**श्लोकान्वयः** - विद्युल्लताकपिलतुङ्गजटाकलापम् उद्यत्प्रभावलयिनं परशुं दधानं क्षत्रान्तकम् भृगुवंशकेतुं मुनिवरं गत्वा प्रणम्य निकटे निभृतः स्थितः अस्मि॥९॥

**व्याख्या** - विद्युदिति- विद्युल्लताकपिलतुङ्गजटाकलापं विद्युत् च इयं लता विद्युल्लता तडिद्वल्ली, तद्वत् कपिलः पिङ्गवर्णः, तुङ्गः महान्, जटायाः कलापः समूहः विस्तृतिः वा यस्य सः। उद्यत्प्रभावलयिनम् उद्यन्ती उदीयमाना प्रभा कान्तिः, तस्याः वलयम् अस्ति अस्य तं प्रद्योतितकान्तिपरिधिमन्तम्। परशुं कुठारम्, दधानं धारयन्तम्, क्षत्रान्तकं क्षत्रियाणाम् अन्तकारकम्, भृगुवंशकेतुं भार्गवकुलश्रेष्ठम्, मुनिवरं तपस्विषु श्रेष्ठम्, गत्वा उपसृत्य, प्रणम्य नमस्कृत्य च निकटे सन्निधौ निभृतः मौनम् अवलम्ब्य तूष्णीं स्थितः अस्मि अभवम्। वसन्ततिलकवृत्तम्॥९॥

**सरलार्थः** - शल्यः तदा कथयति यत् तस्य अपि अस्त्रवृत्तान्तम् श्रोतुं बहु कुतूहलम् अस्ति। कर्णः कथयति यत् सः पूर्वं परशुरामस्य सकाशं गतवान्। तस्य विद्युल्लतावत् कपिलवर्णः महान् जटाकलापः, हस्ते च उज्ज्वलधारः कुठारः। तम् क्षत्रियविनाशकं भृगुवंशश्रेष्ठं तपस्विनं गत्वा प्रणम्य च निकटे तूष्णीं स्थितः कर्णः।

**व्याकरणविमर्शः -**

- गत्वा - √गम् + क्त्वा-प्रत्यये। (गम्लृ गतौ)
- प्रणम्य – प्र-√नम् + क्त्वा (ल्यप्) - प्रत्यये। (णम प्रह्वत्वे शब्दे च)
- विद्युत् - तडित्सौदामिनी विद्युच्चञ्चला चपला अपि इत्यमरः।

## १७.२) मूलपाठम् अवगच्छाम

**शल्यः — ततस्ततः।**

**कर्णः — ततो जामदग्न्येन ममाशीर्वचनं दत्त्वा पृष्टोऽस्मि। को भवान् किमर्थमिहागत इति।**

**शल्यः — ततस्ततः।**

**कर्णः — ततः भगवन्! अखिलान्यस्त्राण्युपशिक्षितुमिच्छामीत्युक्तवानस्मि।**

**शल्यः — ततस्ततः।**

**कर्णः — तत उक्तोऽहं भगवता ब्राह्मणेषूपदेशं करिष्यामि न क्षत्रियाणामिति।**

**शल्यः — अस्ति खलु भगवतः क्षत्रियवंश्यैः पूर्ववैरम्। ततस्ततः।**

**कर्णः — ततो नाहं क्षत्रिय इत्यस्त्रोपदेशं ग्रहीतुमारब्धं मया।**

**शल्यः — ततस्ततः।**



**कर्णः — ततः कतिपयकालातिक्रमे कदाचित् फलमूलसमित्कुशकुसुमाहरणाय गतवता गुरुणा सहानुगतोऽस्मि।**

**शल्यः — ततस्ततः।**

**कर्णः — ततः स गुरुर्वनभ्रमणपरिश्रमान्मदङ्के निद्रावशमुपगतः।**

**शल्यः — ततस्ततः।**

**कर्णः — ततः।**

**कृत्ते वज्रमुखेन नाम कृमिणा दैवान्ममोरुद्वये**
**निद्राच्छेदभयादसह्यत गुरोर्धैर्यात् तदा वेदना।**
**उत्थाय क्षतजाप्लुतः स सहसा रोषानलोद्दीपितो**
**बुद्ध्वा मां च शशाप कालविफलान्यस्त्राणि ते सन्त्विति॥१०॥**

## व्याख्या

**व्याख्या** - कतिपयकालातिक्रमे- कतिपयस्य कालस्य समयस्य अतिक्रमे अतिगमे। फलमूलसमित्कुशकुसुमाहरणाय- फलानि च मूलानि च समिधः च कुशाः च कुसुमानि च फलमूलसमित्कुशकुसुमानि, तेषाम् आहरणाय संग्रहणाय। वनभ्रमणपरिश्रमात् वनस्य अरण्यस्य भ्रमणम् वनभ्रमणम्, तस्मात् परिश्रमः क्लेषः, तस्मात्।

**श्लोकान्वयः** - दैवात् वज्रमुखेन कृमिणा मम ऊरुद्वये कृत्ते सति तदा गुरोः निद्राच्छेदभयात् धैर्यात् वेदना असह्यत। ततः क्षतजाप्लुतः सः उत्थाय सहसा रोषानलोद्दीपितः मां बुद्ध्वा ते अस्त्राणि कालविफलानि सन्तु इति (मां) शशाप॥१०॥

**व्याख्या** - कृत्ते इति- दैवात् अदृष्टवशात्, वज्रमुखेन वज्रवत् मुखं यस्य तथाभूतेन, कृमिणा कीटेन, मम कर्णस्य ऊरुद्वये कृत्ते विदारिते दष्टे सति तदा तस्मिन् समये, गुरोः परशुरामस्य निद्राच्छेदभयात् निद्रायाः स्वापस्य च्छेदः भङ्गः तस्मात् भयं सन्त्रासः तस्मात्, धैर्यात् अविक्लवात् धैर्यम् आलम्ब्य वेदना कृमिदंशनपीडा असह्यत सहनम् अक्रियत। ततः क्षतजाप्लुतः क्षतजेन रुधिरेण आप्लुतः आर्द्रगात्रः, सः महर्षिः, उत्थाय स्वापं विमुच्य सहसा झटिति रोषानलोद्दीपितः रोषः एव अनलः अग्निः, तेन उद्दीपितः जाज्वल्यमानः, माम् कर्णं क्षत्रियमिति बुद्ध्वा ज्ञात्वा ते तव कर्णस्य अस्त्राणि आयुधानि कालविफलानि काले प्राप्तावसरे विफलानि निरर्थकानि सन्तु भवन्तु इति एवं रूपं शशाप शापं दत्तवान्। अस्मात् कारणात् तानि विस्मृतानि इति भावः। शार्दूलविक्रीडितं छन्दः॥१०॥

**सरलार्थः** - कर्णं तूष्णीं स्थितं दृष्ट्वा परशुरामः आशीर्वचनं प्रदाय किमर्थं सः आगतः इति पृष्टवान्। कर्णः तदा विनिवेदितवान् यत् अहम् अखिलानि अस्त्रशास्त्राणि शिक्षितुम् इच्छामि इति। तदा परशुरामः उक्तवान् यत् ब्राह्मणान् शिक्षयामि, न तु क्षत्रियान् इति। यतः हि क्षत्रियैः सह अस्ति तस्य पूर्ववैरम्। तदा अहं क्षत्रियः नास्मि, अहं ब्राह्मणः अस्मि इति मिथ्यावचनम् उक्त्वा कर्णः अस्त्रविद्यां शिक्षितुम् आरब्धवान्। ततः एकस्मिन् दिवसे फलमूलसमित्कुशकुसुमादीनाम् आहरणाय गुरुणा



परशुरामेण सह गतवान्। गुरुः वनभ्रमणपरिश्रमेण कर्णस्य अङ्के निद्रातुम् आरब्धवान्। अदृष्टवशात् बज्रमुखः नाम कृमिः तस्य ऊरुयुगले दष्टवान्। परन्तु गुरोः निद्राव्याघातः स्यात् इति विचिन्त्य स कृमिदंशनपीडां सोढवान्। परन्तु क्षतजेन रुधिरेण आर्द्रगात्रः गुरुः निद्रातः उत्थाय सर्वं विज्ञाय क्रुद्धः सन् शापम् दत्तवान् यत् युद्धकाले तव अस्त्राणि विफलानि भविष्यन्ति इति।

**व्याकरणविमर्शः -**

- उपशिक्षितुम् - उप√शिक्ष् + तुमुन्-प्रत्यये। (शिक्ष विद्योपादाने)
- ग्रहीतुम् - √ग्रह्+ तुमुन्-प्रत्यये। (ग्रह उपादाने)
- असह्यत - √सह् + कर्मणि लङि प्रथमपुरुषैकवचने। (षह मर्षणे)
- उत्थाय - उत्√स्था + क्त्वा (ल्यप्) - प्रत्यये। (ष्ठा गतिनिवृत्तौ)
- शशाप - √शप् + लिटि प्रथमपुरुषैकवचने। (शप आक्रोशे)
- सहसा - अतर्किते तु सहसा स्यात् इत्यमरः।
- वेदना - आक्रोशनमभीषङ्गः संवेदो वेदना न ना इत्यमरः।



## पाठगतप्रश्नाः-१

१. कर्णस्य माता का?

२. कर्णः अस्त्रशिक्षार्थम् कस्य समीपं गतवान्?

३. जामदग्न्यः केभ्यः अस्त्रशिक्षाम् उपदिशति?

४. किन्नामकेन कृमिणा कर्णस्य ऊरुद्वयं दष्टम्?

५. परशुरामः कं शापं दत्तवान् कर्णाय?

## १७.३) मूलपाठम् अवगच्छाम

**शल्यः — अहो कष्टमभिहितं तत्रभवता।**

**कर्णः — परीक्षामहे तावदस्त्रस्य वृत्तान्तम्। (तथा कृत्वा) एतान्यस्त्राणि निर्वीर्याणीव लक्ष्यन्ते। अपि च —**

**इमे हि दैन्येन निमीलितेक्षणा**
**मुहुः स्खलन्तो विवशास्तुरङ्गमाः।**
**गजाश्च सप्तच्छददानगन्धिनो**
**निवेदयन्तीव रणे निवर्तनम्॥११॥**



## व्याख्या

**श्लोकान्वयः** - हि दैन्येन निमीलितेक्षणाः मुहुः स्खलन्तः विवशाः इमे तुरङ्गमाः सप्तच्छददानगन्धिनः गजाः च रणे निवर्त्तनं निवेदयन्ति इव॥११॥

**व्याख्या** - निर्वीर्याणि सामर्थ्यरहितानि।

इमे इति - हि यतः दैन्येन दीनताम् आपन्नेन कातरतया इत्यर्थः, निमीलितेक्षणाः निमीलितानि मुद्रितानि ईक्षणानि नयनानि यैस्ते, अत एव मुहुः भूयः स्खलन्तः मार्गच्युताः सन्तः, विवशाः पराधीनाः, इमे पुरतो वर्तमानाः, तुरङ्गमा घोटकाः अश्वाः, सप्तच्छददानगन्धिनः - सप्तच्छदस्य दान इव गन्धः अस्ति एषाम् इति सप्तपर्णगन्धतुल्यमदस्राविणः गजाः, हस्तिनः च रणे संग्रामे निवर्तनं परावर्तनं पराभवमिति भावः, निवेदयन्ति संसूचयन्ति इव। रणाभिमुखं गच्छन्तः अश्वाः हस्तिनः च मे रणात् निवर्तनं सूचयन्ति, न तु गमनम् इति भावः। वंशस्थवृत्तम्॥११॥

**सरलार्थः** - इमं वृत्तान्तं निशम्य शल्यराजः दुःखितः अभवत्। कर्णः अस्त्रस्य वृत्तान्तः यथार्थः संवृत्तः न वा इति परीक्षितुम् आरब्धवान्। स दृष्टवान् यत् अस्त्राणि सामर्थ्यरहितानि इव दृश्यन्ते। अश्वानां नयनानि मुद्रितानि भवन्ति, धावितुं तेषाम् उत्साहः नास्ति, तस्मात् ते स्खलन्तः सन्ति। हस्तिनः च दुर्गन्धयुक्तं मदं श्रावयन्तः रणात् निवर्तनम् इच्छन्ति।

**व्याकरणविमर्शः -**

- कष्टम् - स्यात् कष्टं कृच्छ्रमाभीलम् इत्यमरः।
- वृत्तान्तः - वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात् इत्यमरः।

## १७.४) मूलपाठम् अवगच्छाम

**कर्णः — शङ्खदुन्दुभयश्च निःशब्दाः।**

**शल्यः — भोः कष्टं किं नु खल्विदम्।**

**कर्णः — शल्यराज! अलमलं विषादेन।**

**हतोऽपि लभते स्वर्गं जित्वा तु लभते यशः।**
**उभे बहुमते लोके नास्ति निष्फलता रणे॥१२॥**

## व्याख्या

**श्लोकान्वयः** - रणे (वीरः) हतः अपि स्वर्गं लभते, जित्वा यशः लभते, लोके उभे बहुमते। रणे निष्फलता नास्ति॥१२॥

**व्याख्या** - हतोऽपि इति - रणे संग्रामे, (वीरः योद्धा) हतः अपि मृत्युं प्राप्तः अपि स्वर्गं स्वर्गलोकं लभते, प्राप्नोति। किञ्च, जित्वा विजित्य तु यशः कीर्तिं लभते प्राप्नोति, लोके भुवने वीराणां कृते उभे अपि स्वर्गयशसी बहुमते अभीष्टे, अतः रणे निष्फलता फलराहित्यं नास्ति न वर्तते, उभयथा लाभ एव। अनुष्टुप् छन्दः॥१२॥



**सरलार्थः** - कर्णः युद्धे स्वस्य अशुभलक्षणं संसूचयन् आह- दुन्दुभिशब्दः अपि न श्रूयते इति। शल्यराजः कष्टं प्रकाशयति। कर्णः तं सान्त्वयति, कथयति च - विषादः मास्तु इति। ततः कर्णः युद्धे अशुभलक्षणानि न गण्यानि मन्यमानः रणे वीराणां कृते जयपराजययोः उभयोः साफल्यं प्रदर्शयति - युद्धे हतः भवति चेत् स्वर्गः लभ्यते, जयं लभ्यते चेत् यशः लभ्यते। अतः रणे निष्फलता नास्ति इति।

**व्याकरणविमर्शः -**

- **वाच्यान्तरम्** - हतः अपि स्वर्गं लभते (कर्तरि) - हतेन अपि स्वर्गः लभ्यते (कर्मणि)।
- रणे निष्फलता न अस्ति (कर्तरि) - रणे निष्फलतया न भूयते (भावे)।

## १७.५) मूलपाठम् अवगच्छाम

**कर्णः — अपि च**

**इमे हि युद्धेष्वनिवर्तिताशा**
**हया सुपर्णेन समानवेगाः।**
**श्रीमत्सु काम्बोजकुलेषु जाता**
**रक्षन्तु मां यद्यपि रक्षितव्यम्॥१३॥**

## व्याख्या

**श्लोकान्वयः** - हि युद्धेषु अनिवर्तिताशाः सुपर्णेन समानवेगाः श्रीमत्सु काम्बोजकुलेषु जाताः इमे हयाः यद्यपि मया रक्षितव्यम् तथापि ते (इदानीं) मां रक्षन्तु॥१३॥

**व्याख्या** - इमे इति- हि यतः, युद्धेषु संग्रामेषु, अनिवर्तिताशाः अनिवर्तिता सफला आशा येषाम् ते, सुपर्णेन विहगेन समानवेगाः समानः वेगः येषां ते, विहगतुल्यद्रुतवेगाः इत्यर्थः। श्रीमत्सु श्रीः अस्ति येषु तेषु श्रीप्रदायिषु काम्बोजकुलेषु काम्बोजदेशोत्पन्नवंशेषु लोके काबुली इति ख्यातिं गतेषु जाताः प्रादुर्भूताः इमे संग्रामे वर्तमानाः, हयाः अश्वाः, यद्यपि मया रक्षितव्यं रक्षितुं योग्याः, तथापि ते एव (इदानीम् अस्मिन् युद्धकाले) मां कर्णं रक्षन्तु रक्षां कुर्वन्तु। उपजातिवृत्तम्॥१३॥

**सरलार्थः** - इदानीं स्वकीयं शुभलक्षणं प्रशंसन् आह कर्णः - एते अश्वाः युद्धे आशाम् न त्यजन्ति, एते गरुडसदृशाः द्रुतवेगाः, काम्बोजदेशे जाताः। यद्यपि एते अश्वाः कर्णेन रक्षणीयाः, तथापि ते एव इदानीं युद्धे कर्णं रक्षन्तु इति कर्णस्य प्रार्थना।

**व्याकरणविमर्शः -**

- रक्षितव्यम् - √रक्ष् + तव्य-प्रत्यये। (रक्ष पालने)
- सुपर्णः - नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः इत्यमरः।

## १७.६) मूलपाठम् अवगच्छाम

**कर्णः — अक्षयोऽस्तु गोब्राह्मणानाम्। अक्षयोऽस्तु पतिव्रतानाम्। अक्षयोऽस्तु रणेष्वपराङ्मुखानां योधपुरुषाणाम्। अक्षयोऽस्तु मम प्राप्तकालस्य। एष भोः प्रसन्नोऽस्मि।**

**समरमुखमसह्यं पाण्डवानां प्रविश्य**
**प्रथितगुणगणाढ्यं धर्मराजं च बद्ध्वा।**
**मम शरवरवेगैरर्जुनं पातयित्वा**
**वनमिव हतसिंहं सुप्रवेशं करोमि॥१४॥**

**शल्यराज! यावद्रथमारोहावः।**

**शल्यः — बाढम्।**

**(उभौ रथारोहणं नाटयतः)**

**कर्णः — शल्यराज! यत्रासावर्जुनस्तत्रैव चोद्यतां मम रथः।**

## व्याख्या

**व्याख्या** - गोब्राह्मणानाम्- गावः च ब्राह्मणाः च तेषां गोविप्राणाम्, अक्षयः संवृद्धिः, अस्तु भवतु। पतिव्रतानां मनसा वाचा कर्मणा पतिपरायणानां साध्वीनां नारीणाम्। रणेषु युद्धेषु अपराङ्मुखानां अपृष्ठदर्शिनां योधपुरुषाणां वीरपुरुषाणाम्। प्राप्तकालस्य प्राप्तः कालः अन्तकः यमः यस्य तस्य मम कर्णस्य अक्षयः विनाशराहित्यम् अस्तु भूयात्।

**श्लोकान्वयः** - पाण्डवानाम् असह्यं समरमुखं प्रविश्य प्रथितगुणगणाढ्यं धर्मराजं बद्ध्वा च मम शरवरवेगैः अर्जुनं पातयित्वा हतसिंहं वनम् इव सुप्रवेशं करोमि॥१४॥

**व्याख्या** - समरेति - पाण्डवानां पाण्डूपुत्राणाम्, असह्यं सर्वथा सोढुम् अशक्यम्, समरमुखं रणाभिमुखं प्रविश्य प्रवेशं कृत्वा, प्रथितगुणगणाढ्यं प्रथितेन प्रसिद्धेन गुणगणेन गुणसमूहेन आढ्यं सम्पन्नम्, धर्मराजं युधिष्ठिरम्, बद्ध्वा बन्धनं विधाय पाशैः इति शेषः, किं च मम कर्णस्य शरवरवेगैः - शरेषु वराः बाणश्रेष्ठाः, तेषां वेगाः प्रवाहाः तैः, अर्जुनम् एतन्नामकं मध्यमपाण्डवं पातयित्वा निपात्य हत्वा, हतसिंहं हतः सिंहः यस्मिन् तत् विनष्टमृगपतिं वनम् अरण्यम् इव यथा सुप्रवेशम् सुखं प्रवेशयोग्यं रणस्थलमिति शेषः, करोमि विदधामि। मालिनीवृत्तम् ॥१४॥

**सरलार्थः** - स्वस्य शुभं चिन्तयन् सर्वेषां कृते कल्याणं भवतु इति प्रार्थयति कर्णः। तेन उच्यते - गवा, ब्राह्मणानाम्, पतिव्रतानां नारीणाम्, रणेषु अपराङ्मुखानां योद्धृणाम्, मम कर्णस्य च अक्षयः अस्तु इति। इदानीं प्रसन्नः सन् कर्णः शल्यं प्रति तस्य चिकीर्षितं वदति यत् पाण्डवानां युद्धस्थलं प्रविश्य प्रख्यातगुणशालिनं धर्मराजं युधिष्ठिरं बद्ध्वा मध्यमपाण्डवम् अर्जुनं शरवर्षणेन हनिष्यामि। तेन च यथा वने सिंहः हतः चेत् तद्वनं सर्वेषां कृते निर्भयेन प्रवेशयोग्यं भवति, तद्वत् पाण्डवानां युद्धस्थलं सर्वेषां कृते प्रवेशयोग्यं भविष्यति इति।

**व्याख्या** - बाढं निश्चयेन। चोद्यतां सम्प्रेर्यताम्।



**व्याकरणविमर्शः -**

- प्रविश्य – प्र-√विश् + क्त्वा (ल्यप्) - प्रत्यये। (विश प्रवेशने)
- पातयित्वा - √पा+ णिच् + क्त्वा-प्रत्यये। (पत्लृ गतौ)
- वनम् - अटव्यरण्यं विपिनं गहनं काननं वनम् इत्यमरः।



## पाठगतप्रश्नाः-२

६. रणे जये पराजये च विफलता नास्ति किमर्थम्?

७. कर्णस्य हयाः कस्मिन् देशे जाताः।

८. पाण्डवेषु कं हन्तुम् कर्णः इच्छति?



## पाठसारः

- ➢ अस्मिन् पाठे मुख्यविषयः अस्ति कर्णस्य अस्त्रविद्यालाभाय गमनम्। गुरुसकाशाद् विद्याप्राप्तिः। गुरोः शापः च। अयमेव अस्त्रवृत्तान्तः। कर्णस्वमुखेन शल्यराजं श्रावयति। संक्षेपेण स एव अधस्तात् उपन्यस्तः।
- ➢ कर्णः अस्त्रवृत्तान्तं कथयति -
- ➢ अस्त्रवृत्तान्तः - पूर्वं कर्णः परशुरामसकाशं गत्वा प्रणम्य निकटे तूष्णीं स्थितः। ततः परशुरामः पृष्टवान्- किमर्थं भवान् इह आगतः असि इति। ततः कर्णः निवेदितवान् यत् अखिलाम् अस्त्रविद्यां शिक्षितुम् अहम् आगतवान् इति। ततः परशुरामः उक्तवान् यत् ब्राह्मणान् शिक्षयामि, न क्षत्रियान् इति। ततः अहं क्षत्रियः नास्मि इति उक्त्वा कर्णः अस्त्रविद्यां ग्रहीतुम् आरब्धवान्। ततः एकस्मिन् दिवसे फलमूलसमित्कुशकुसुमादीनाम् आहरणाय गुरुणा परशुरामेण सह गतवान्। गुरुः वनभ्रमणपरिश्रमेण कर्णस्य अङ्के निद्रातुम् आरब्धवान्। अदृष्टवशात् बज्रमुखः नाम कृमिः तस्य ऊरुयुगले दष्टवान्। परन्तु गुरोः निद्राव्याघातः स्यात् इति विचिन्त्य स कृमिदंशनपीडां सोढवान्। परन्तु क्षतजेन रुधिरेण आर्द्रगात्रः गुरुः निद्रातः उत्थाय सर्वं विज्ञाय क्रुद्धः सन् शापं दत्तवान् यत् युद्धकाले तव अस्त्राणि विफलानि भविष्यन्ति इति।
- ➢ एवम् अस्त्रवृत्तान्तम् निवेद्य वृत्तान्तस्य परीक्षणाय उद्युक्तः कर्णः। सः कथयति यत् अस्त्राणि सामर्थ्यरहितानि इव लक्ष्यन्ते, अश्वाः अपि दैन्येन चक्षूंषि निमिलन्ति, गजाः च दुर्गन्धमदधारायुक्ताः सन्तः संग्रामे निवर्तनं सूचयन्ति इव। शङ्खनादः अपि न श्रूयते। परन्तु विषादः मास्तु। रणे हतः चेत् स्वर्गः लभ्यते, जयः भवति चेत् यशः लभ्यते, अतः रणे निष्फलता नास्ति। अपि च, युद्धेषु अनिवर्तिताशाः इमे मया रक्षिताः गरुडसमानवेगाः अश्वाः



माम् रक्षन्तु इति। इत्थं विचिन्त्य कर्णस्य मनः प्रसन्नं जातम्। प्रसन्नः सन् स कथयति यत् पाण्डवसैन्यानाम् अग्रभागं प्रविश्य धर्मराजं युधिष्ठिरं बद्ध्वा शरेण अर्जुनं हनिष्यामि, तेन च हतसिंहं वनमिव युद्धक्षेत्रं सर्वेषां प्रवेशयोग्यं भविष्यति।

➢ एवं विचिन्त्य रथम् आरुह्य अर्जुनस्य समीपं स्वस्य रथं नेतुं शल्यराजं निर्दिदेश कर्णः।



## पाठान्तप्रश्नाः

१. कर्णेन कृतं परशुरामस्य वर्णनं प्रकटयत।

२. युद्धे कर्णस्य अशुभलक्षणानि वर्णयत।

३. कर्णस्य शापवृत्तान्तं सविस्तरं लिखत।

४. कर्णस्य हयानां वैशिष्ट्यानि लिखत।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. कुन्तिः।

२. जामदग्न्यः परशुरामः।

३. ब्राह्मणेभ्यः।

४. वज्रमुखेन कृमिणा कर्णस्य ऊरुद्वये कृत्ते।

५. परशुरामः कर्णाय शापं ददाति- कालविफलानि अस्त्राणि ते भविष्यन्ति इति।

**उत्तराणि-२**

६. रणे (वीरः) हतः अपि स्वर्गं लभते, जित्वा यशः लभते इति लोके उभे बहुमते। अतः रणे निष्फलता नास्ति।

७. काम्बोजदेशे।

८. अर्जुनम्।

---

॥ इति सप्तदशः पाठः ॥

---

--)()(--

१८

# कवचकुण्डलदानम्

## प्रस्तावना

पूर्वस्मिन् पाठे विषयः आसीत् यत् कर्णः अस्त्राणि लब्धुं परशुरामं समुपगच्छति। परन्तु यद्यपि सः अस्त्रविद्यां लब्धवान् तथापि गुरोः शापमपि लब्धवान्। अतः इदं दुःखं तस्य अन्तःकरणे अस्ति एव। तथापि तस्य समीपे कवचकुण्डले स्तः। अतः अपि सः अजेयः अस्ति। परन्तु कर्णः दानवीरः इति भारतस्य इतिहासे सुप्रसिद्धम् अस्ति। स स्वस्य प्राणभयं जानन् अपि छद्मवेषधारिणे भिक्षुकाय कवचकुण्डले ददाति। कर्णस्य अदेयं किमपि नास्तीति कर्णस्य स्वकीयैः वचनैः अस्मिन् पाठे प्रकटितम् अस्ति। कविः कर्णस्य मनोभावं सुललितया शैल्या प्रकटयति।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- इन्द्रस्य छलं ज्ञास्यति।
- कर्णस्य दाने औदार्यं ज्ञास्यति।
- कवेः भासस्य कवित्वं परिचिनुयात्।
- नाटके एकैकं प्रसङ्गं संस्कृतपरम्परायां कथम् उपन्यस्यते इति बोद्धुं शक्नुयात्।
- विभिन्नशब्दानां प्रयोगं कर्तुं शक्नुयात्।
- व्याकरणविषयान् कांश्चन अवगन्तुं पारयेत्।
- अत्रत्यशब्दान् ज्ञात्वा संस्कृतेन लेखने वचने च तेषां शब्दानां प्रयोगं कर्तुं शक्ष्यति।

## १८.१) मूलपाठम् अवगच्छाम

**(नेपथ्ये)**

**भो कण्ण ! महत्तरं भिक्खं याचेमि। [भोः कर्ण ! महत्तरां भिक्षां याचे।]**

**कर्णः — (आकर्ण्य) अये वीर्यवान् शब्दः।**



**श्रीमानेष न केवलं द्विजवरो यस्मात् प्रभावो महा-**
**नाकर्ण्य स्वरमस्य धीरनिनदं चित्रार्पिताङ्गा इव।**
**उत्कर्णस्तिमिताञ्चिताक्षवलितग्रीवार्पिताग्रानना-**
**स्तिष्ठन्त्यस्ववशाङ्गयष्टि सहसा यान्तो ममैते हयाः॥१५॥**

**आहूयतां स विप्रः। न न। अहमेवाह्वयामि। भगवन्नित इतः।**

## व्याख्या

**श्लोकान्वयः -** एष केवलं द्विजवरः न अपि तु श्रीमान्, यस्मात् महान् प्रभावः, धीरनिनदं स्वरमाकर्ण्य मम एते हयाः उत्कर्णस्तिमिताञ्चिताक्षवलितग्रीवार्पिताग्राननाः अस्ववशाङ्गयष्टि सहसा यान्तः चित्रार्पिता इव तिष्ठन्ति॥१५॥

**व्याख्या -** आकर्ण्य श्रुत्वा। वीर्यवान् गम्भीरः। श्रीमान् इति- एषः याचकः, केवलम् एकमात्रं द्विजवरः ब्राह्मणश्रेष्ठः न, अपि तु श्रीमान् श्रिया विशिष्टः, विशिष्टशोभायुक्तः। यस्मात् यतः कारणात् महान् अतिशयितः प्रभावः दृश्यते इति शेषः। कः सः प्रभावः? (तस्य) धीरनिनदं धीरः गम्भीरः निनदः घोषः यस्मिन् सः, तम् स्वरं कण्ठरवम् आकर्ण्य श्रुत्वा मम कर्णस्य एते हयाः घोटकाः उत्कर्णस्तिमिताञ्चिताक्षवलितग्रीवार्पिताग्राननाः - उत्कर्णाः श्रवणोत्सुकाः स्तिमिताञ्चिताक्षाः स्तिमितानि निमीलितानि अञ्चितानि मनोहराणि अक्षीणि नयनानि येषां ते उत्कर्णस्तिमिताञ्चिताक्षाः, वलितग्रीवार्पिताननाः वलितायां ग्रीवायाम् अर्पितानि अग्राननानि येषां ते, उत्कर्णाः च स्तिमिताञ्चिताक्षाः च वलितग्रीवार्पिताग्राननाः च इति उत्कर्णस्तिमिताञ्चिताक्षवलितग्रीवार्पिताग्राननाः। अस्ववशाङ्गयष्टि स्ववशा न भवतीति अस्ववशा अङ्गयष्टिः शरीरं यस्मिन् कर्मणि तद्यथा स्यात् पराधीनशरीरम्, सहसा अकस्मात्, यान्तः गच्छन्तः, चित्रार्पिताङ्गाः चित्रे चित्रफलके, अर्पितानि प्रदत्तानि अङ्गानि शरीराणि येषां ते, चित्रलिखिताः, इव यथा तिष्ठन्ति स्थिराः भवन्ति। याचकस्य अस्य प्रभावाद् एव मम अश्वाः चित्रलिखिता इव निश्चलाः सम्पन्नाः इत्यर्थः। शार्दूलविक्रीडितं छन्दः।॥१५॥

**सरलार्थः -** एवम् उक्त्वा युद्धस्थलगमनाय कर्णः शल्येन सह रथारोहणं कृतवान्। ततः कर्णः शल्यम् आदिष्टवान् यत् यत्र अर्जुनः अस्ति तत्रैव मम रथः नीयतामिति। तस्मिन्नेव समये कर्णः मार्गे 'महत्तरां भिक्षां याचे' इति भिक्षुणा कथितम् गम्भीरम् शब्दम् श्रुत्वा आह - एषः कण्ठस्वरः श्रीमतः वीर्यवतः च ब्राह्मणस्य, यतो हि धीरनिनादं कण्ठस्वरमिमम् आकर्ण्य अश्वाः उत्सुकाः सन्तः सुन्दराणि नयनानि सोत्सुकम् उन्मील्य चित्रार्पिताः इव स्थिराः संवृत्ताः इति। तेषाम् अङ्गानि स्ववशे न सन्ति। एवम् उक्त्वा स शल्याय उक्तवान् यथा शल्यः विप्रम् आह्वयेत्, परन्तु तत् स्वयमेव निषिद्ध्य स स्वयं विप्रम् आहूतवान्।

### व्याकरणविमर्शः -

- आकर्ण्य - आ √ कर्ण + क्त्वा (ल्यप्)-प्रत्यये। (कर्ण भेदने, आकर्णयति शृणोति)
- यान्तः - √या + शतृप्रत्यये पुंलिङ्गे प्रथमाविभक्तौ बहुवचने। (या प्रापणे)



- वाच्यान्तरम् - आहूयतां स विप्रः (कर्मणि) - (भवान्) तं विप्रम् आह्वयतु। (कर्तरि)

## १८.२) मूलपाठम् अवगच्छाम

**(ततः प्रविशति ब्राह्मणरूपेण शक्रः)**

**शक्रः — भो मेघाः, सूर्येणैव निवर्त्य गच्छन्तु भवन्तः। (कर्णमुपगम्य)**

**भो कण्ण! महत्तरं भिक्खं याचेमि। [भोः कर्ण! महत्तरां भिक्षां याचे।]**

**कर्णः — दृढं प्रीतोऽस्मि भगवन्!**

**यातः कृतार्थगणनामहमद्य लोके**
**राजेन्द्रमौलिमणिरञ्जितपादपद्मः।**
**विप्रेन्द्रपादरजसा तु पवित्रमौलिः**
**कर्णो भवन्तमहमेष नमस्करोमि॥१६॥**

## व्याख्या

**श्लोकान्वयः** - अद्य लोके राजेन्द्रमौलिमणिरञ्जितपादपद्मः कृतार्थगणनां यातः तु विप्रेन्द्रपादरजसा पवित्रमौलिः एषः अहम् कर्णः भवन्तं नमस्करोमि॥१६॥

**व्याख्या** - यात इति - अद्य सम्प्रति, लोके भुवने, राजेन्द्रमौलिमणिरञ्जितपादपद्मः राजेन्द्राणां राजश्रेष्ठानाम्, मौलौ शिरसि, ये मणयः रत्नानि, तैः रञ्जितं सुशोभितं, पादपद्मं चरणकमलं यस्य सः। कृतार्थगणनां कृतार्थानां कृतज्ञानाम्, गणनां संख्यानम्, अहम् कर्णः, यातः प्राप्तः। तु किन्तु, विप्रेन्द्रपादरजसा विप्रेन्द्राणां द्विजश्रेष्ठानाम्, पादरजसा चरणरेणुना, पवित्रमौलिः पवित्रमस्तकः, एषः भवत्पुरः स्थितः, अहं कर्णः, भवन्तं याचकम्, नमस्करोमि प्रणमामि। वसन्ततिलकावृत्तम् ॥१६॥

**सरलार्थः** - कर्णस्य आह्वानेन ब्राह्मणरूपधारी मञ्चं प्रविश्य मेघान् उद्दिश्य उक्तवान् यत् भो मेघाः, भवन्तः सूर्येण सह एव प्रयाणं कुर्वन्तु इति। ततः स कर्णस्य समीपम् आगत्य उक्तवान्- भो कर्ण, महत्तरां भिक्षां याचे इति। ब्राह्मणं दृष्ट्वा प्रीतः सन् कर्णः तस्याशीर्वादलाभाय तं नमस्करोति, वदति च — राजश्रेष्ठानां मुकुटमणिभिः मम चरणकमले शोभिते, लोके कृतार्थेषु अहम् अन्यतमः, ब्राह्मणश्रेष्ठानां पादरजसा पवित्रीकृतमस्तकः अहं कर्णः अद्य भवन्तं नमस्करोमि इति।

### व्याकरणविमर्शः -

- उपगम्य – उप-√गम् + क्त्वा (ल्यप्) -प्रत्यये।
- पद्म – वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्। सहस्रपत्रं कमलं शतपत्रं कुशेशयम्।। इत्यमरः।
- रजः - रेणुर्द्वयोः स्त्रियां धुलिः पांसुर्ना न द्वयो रजः इत्यमरः।

## १८.३) मूलपाठम् अवगच्छाम

**शक्रः — (आत्मगतम्) किं नु खलु मया वक्तव्यं, यदि दीर्घायुर्भवेति वक्ष्ये दीर्घायुर्भविष्यति। यदि न वक्ष्ये मूढ इति मां परिभवति। तस्मादुभयं परिहृत्य किं नु खलु वक्ष्यामि। भवतु दृष्टम्। (प्रकाशम्) भो कण्ण ! सुय्ये विअ, चन्दे विअ, हिमवन्ते विअ, सागले विअ, चिट्ठदु दे जसो। [भो कर्ण! सूर्य इव, चन्द्र इव, हिमवान् इव, सागर इव तिष्ठतु ते यशः।]**

**कर्णः — भगवन्! किं न वक्तव्यं दीर्घायुर्भवेति। अथवा एतदेव शोभनम्। कुतः —**

**धर्मो हि यत्नैः पुरुषेण साध्यो**
**भुजङ्गजिह्वाचपला नृपश्रियः।**
**तस्मात् प्रजापालनमात्रबुद्ध्या**
**हतेषु देहेषु गुणा धरन्ते॥१७॥**

**भगवन् किमिच्छसि। किमहं ददामि।**

## व्याख्या

**श्लोकान्वयः** - हि पुरुषेण धर्मः यत्नैः साध्यः, नृपश्रियः भुजङ्गजिह्वाचपलाः, तस्मात् देहेषु नष्टेषु प्रजापालनमात्रबुद्ध्या गुणाः धरन्ते॥१७॥

**व्याख्या** - परिभवति- उपहसति।

धर्मः इति - हि यतः, पुरुषेण मानवेन, धर्मः शास्त्रोक्तविधिनिषेधादिः, यत्नैः श्रद्धया साध्यः कर्तव्यः, नृपश्रियः राजलक्ष्म्यः, भुजङ्गजिह्वाचपलाः भुजङ्गानाम् सर्पाणाम्, जिह्वा रसना, इव चपलाः चञ्चलाः, तस्मात् तद्धेतोः, देहेषु शरीरेषु, हतेषु विनष्टेषु, प्रजापालनमात्रबुद्ध्या प्रजानां पालनं संरक्षणम्, तन्मात्रा बुद्धिः मतिः, तया। गुणाः दयादाक्षिण्यादयः धरन्ते तिष्ठन्ति। उपजातिवृत्तम्॥१७॥

**सरलार्थः** - कर्णवचनं श्रुत्वा शक्रः आत्मगततया वक्ति यत् यदि आशीर्वादरूपेण दीर्घायुः भव इति वदिष्यामि, तर्हि सः दीर्घायुः भविष्यति, परन्तु न वदिष्यामि चेत् मूढ इति विचिन्त्य मम उपहसनं करिष्यति। तस्मात् उभयमपि परित्यक्तव्यम्। ततः स प्रकाश्येन वदति - भोः कर्ण, सूर्यः इव, चन्द्रः इव, पर्वतमिव, सागरः इव भवतः यशः चिरं तिष्ठतु इति। सामान्यतः आशीर्वादरूपेण सर्वे दीर्घायुः प्रार्थयन्ते, परन्तु एष ब्राह्मणः तथा न उक्तवान्। तस्मात् एतद् आकर्ण्य कर्णः वक्ति - हे ब्राह्मण, दीर्घायुः भव इति किं न वक्तव्यम्? अथवा दीर्घायुषापेक्षया अयम् आशीर्वादः एव शोभनः। किमर्थमिति चेत् - धर्मः परमयत्नेन पुरुषेण कर्तव्यः, राजलक्ष्मीः सर्पजिह्वा इव अत्यन्तं चञ्चला, तस्मात् प्रजापालनमात्रबुद्ध्या कर्तव्यं कर्म सम्पादनीयम्। देहत्यागात् अनन्तरं गुणाः एव तिष्ठन्ति, अर्थात् गुणैः हि मानवः दीर्घजीवी भवति, न तु अर्थेन, न वा देहमाश्रित्य दीर्घकालजीवितेन इत्यर्थः। ततः स ब्राह्मणः कर्णात् किम् इच्छति इति पृष्टवान् कर्णः।



**व्याकरणविमर्शः -**

- यशः - यशः कीर्तिः समज्ञा च इत्यमरः।
- भुजङ्गः - सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः।। आशीविषो विषधरश्चक्री व्यालः सरीसृपः। कुण्डली गूढपाच्चक्षुःश्रवा काकोदरः फणी।। दर्विकरो दीर्घपृष्ठो दन्दशूको बिलेशयः। उरगः पन्नगो भोगी जिह्मगः पवनाशनः।। इत्यमरः।
- वाच्यान्तरम् - धर्मः हि यत्नैः पुरुषेण साध्यः (कर्मणि) - पुरुषः हि यत्नैः धर्मं साधयेत्। (कर्तरि)



## पाठगतप्रश्नाः-१

१. ब्राह्मणरूपी शक्रः कर्णाय कम् आशीर्वादं दत्तवान्?

२. इन्द्रः किं रूपम् आश्रित्य कर्णसमीपम् आगतवान्?

३. कर्णः शक्रात् कम् आशीर्वादं वस्तुतः इच्छति।

४. हुतं च दत्तं च तथैव तिष्ठति- कस्य उक्तिः इयम्?

५. भुजङ्गजिह्वाचपलाः नृपश्रियः - इति वाक्यस्य कः अर्थः?

## १८.४) मूलपाठम् अवगच्छाम

**शक्रः — महत्तरं भिक्खं याचेमि। [महत्तरां भिक्षां याचे।]**

**कर्णः — महत्तरां भिक्षां भवते प्रदास्ये। श्रूयन्तां मद्विभवाः।**

**गुणवदमृतकल्पक्षीरधाराभिवर्षि**
**द्विजवर रुचितं ते तृप्तवत्सानुयात्रम्।**
**तरुणमधिकमर्थिप्रार्थनीयं पवित्रं**
**विहितकनकशृङ्गं गोसहस्रं ददामि॥१८॥**

## व्याख्या

**श्लोकान्वयः** - हे द्विजवर, (अहम्) गुणवदमृतकल्पक्षीरधाराभिवर्षि, तृप्तवत्सानुपात्रं तरुणम् अधिकम् अर्थिप्रार्थनीयं विहितकनकशृङ्गं पवित्रं रुचितं गोसहस्रं ते ददामि॥१८॥

**व्याख्या** - गुणवदिति - हे द्विजवर हे ब्राह्मणश्रेष्ठ, (अहं कर्णः) गुणवदमृतकल्पक्षीरधाराभिवर्षि - गुणवतां प्रशस्तगुणयुक्तानाम्, अमृतकल्पानां सुधातुल्यानाम्, क्षीराणां दुग्धानाम्, धारां प्रवाहम्, अभिवर्षितुमं शीलम् अस्य इति गुणवदमृतकल्पक्षीरधाराभिवर्षि। तृप्तवत्सानुपात्रं तृप्तानाम् सन्तुष्टानाम्, वत्सानाम् गोशिशूनाम्, अनु पश्चात् यात्रा लोकनिर्वाहः यस्य तत्, वत्सतृप्त्यनन्तरम् अपि



लोकयात्रानिर्वाहिकीम्, तरुणं युवानम्, अधिकं भूयिष्ठम्, अर्थिप्रार्थनीयम् - अर्थिभिः याचकैः, प्रार्थनीयं याचनीयम्, विहितकनकशृङ्गम् - विहितानि अलङ्कृतानि कनकैः सुवर्णैः शृङ्गाणि यस्मिन् तत्। पवित्रं यज्ञार्हम्, रुचितं शोभनम्, गोसहस्रम् - गवां.धेनूनाम्, सहस्रं दशशतसंख्याकम्, ते तुभ्यं ददामि समर्पयामि। मालिनीवृत्तम्॥१८॥

**सरलार्थः** - महत्तरां भिक्षां याचे इति ब्राह्मणवचनं श्रुत्वा तस्य याच्ञायां सङ्कोचदूरीकरणार्थम् स्वस्य विभवं प्रकटयति कर्णः। कर्णः कथयति - गवां सहस्रं भवते दास्यामि इति। कीदृश्यः गावः इति चेत् ताः गुणयुक्ताम् अमृततुल्यां दुग्धधारां वर्षयन्ति, तासां दुग्धेन वत्साः तृप्ताः भवन्ति, किञ्च लोकयात्रानिर्वाहः अपि सम्भवति। ताः तरुणाः, सर्वैः अर्थिभिः च इष्यमाणाः, तासां शृङ्गाणि सुवर्णैः अलङ्कृतानि च।

**व्याकरणविमर्शः -**

- प्रदास्ये - प्र-√दा+ लृटि प्रथमपुरुषैकवचने।
- पवित्रम् - पूतं पवित्रं मेध्यं च वीध्रं तु विमलार्थकम् इत्यमरः।
- वाच्यान्तरम् - महत्तरां भिक्षां याचे (कर्तरि) - (मया) महत्तरा भिक्षा याच्यते (कर्मणि)।

## १८.५) मूलपाठम् अवगच्छाम

**शक्रः — गोसहस्सं त्ति। मुहुत्तअं खिरं पिबामि। णेच्छामि कण्ण! णेच्छामि। [गोसहस्रमिति। मुहूर्तकं क्षीरं पिबामि। नेच्छामि कर्ण! नेच्छामि।]**

**कर्णः — किं नेच्छसि भवान्। इदमपि श्रूयताम्।**

**रवितुरगसमानं साधनं राजलक्ष्म्या**
**सकलनृपतिमान्यं मान्यकाम्बोजजातम्।**
**सुगुणमनिलवेगं युद्धदृष्टापदानं**
**सपदि बहुसहस्रं वाजिनां ते ददामि॥१९॥**

## व्याख्या

**श्लोकान्वयः** - रवितुरगसमानं राजलक्ष्म्याः साधनं सकलनृपतिमान्यं मान्यकाम्बोजजातम् सुगुणम् अनिलवेगं युद्धदृष्टापदानं वाजिनां बहु सहस्रं सपदि ते ददामि॥१९॥

**व्याख्या** - रवीति - रवितुरगसमानं रवेः तुरगाः तैः समानम्, सूर्याश्वतुल्यम्। राजलक्ष्म्याः राज्ञाम् लक्ष्मीः तस्याः नृपश्रियः, साधनं कारणम्, सकलनृपतिमान्यं सकलानां सम्पूर्णानां नृपतीनां राज्ञां मान्यं मानार्हम्, मान्यकाम्बोजजातं मान्येषु प्रशस्ततरेषु काम्बोजेषु एतन्नामकदेशविशेषेषु जातं समुत्पन्नम्। सुगुणं प्रशस्तगुणयुक्तम्, अनिलवेगं वायुजवम्, युद्धदृष्टापदानं युद्धेषु दृष्टानि अपदानानि पराक्रमयुक्तकर्माणि



यस्मिन् तत् समरदृष्टपराक्रमादिकर्मवृत्तम्, वाजिनां तुरगाणाम्, बहुसहस्रम् अनेकसहस्रसंख्याकं सपदि सद्यः ते तुभ्यं ददामि अर्पणं करोमि। मालिनीवृत्तम्॥१९॥

**सरलार्थः** - कर्णेन दातुम् इष्यमाणं गोसहस्रं न इच्छति याचकः। सः कथयति - यद् गोसहस्रं भवान् दातुम् इच्छति तेन स्वल्पकालं यावत् क्षीरं पिबामि केवलम्। अतः तद् न इच्छामि इति। तदा कर्णः बहुसहस्राणि अश्वान् दातुम् इच्छन् कथयति - सूर्याश्वतुल्यान्, राजलक्ष्म्याः साधनभूतान्, सकलनृपैः अभिवन्द्यान्, काम्बोजकुले जातान्, प्रशस्तगुणयुक्तान् वायुसमानवेगान् युद्धे दृष्टपराक्रमान् बहुसहस्राणि अश्वान् इदानीम् एव ददामि इति।

**व्याकरणविमर्शः -**

- क्षीरम् - दुग्धं क्षीरं पयः समम् इत्यमरः।
- अनिलः - श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः। पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः।। इत्यमरः।

## १८.६) मूलपाठम् अवगच्छाम

**शक्रः — अस्स त्ति। मुहूत्तअं आलुहामि। णेच्छामि कण्ण! णेच्छामि। [अश्व इति। मुहूर्तकम् आलुभामि। नेच्छामि कर्ण, नेच्छामि।]**

**कर्णः — किं नेच्छति भगवान्। अन्यदपि श्रूयताम्!**

**मदसरितकपोलं षट्पदैः सेव्यमानं**
**गिरिवरनिचयाभं मेघगम्भीरघोषम्।**
**सितनखदशनानां वारणानामनेकं**
**रिपुसमरविमर्दं वृन्दमेतद्ददामि॥२०॥**

## व्याख्या

**श्लोकान्वयः** - मदसरितकपोलं षट्पदैः सेव्यमानं गिरिवरनिचयाभं मेघगम्भीरघोषं सितनखदशनानां वारणानां रिपुसमरविमर्द्दम् एतद् अनेकं वृन्दं ते ददामि॥२०॥

**व्याख्या** - मदेति- मदसरितकपोलं मदेन सरिताः सिक्ताः, कपोलाः गण्डस्थलाः, यस्मिन् तत्, षट्पदैः भ्रमरैः, सेव्यमानं निरन्तरं विराजितम्, गिरिवरनिचयाभं गिरिवराणां पर्वतश्रेष्ठानाम् निचयाः पुञ्जाः तेषाम् आभा इव आभा यस्मिन् तत्। मेघगम्भीरघोषं मेघः, जलदः इव गम्भीरः घोषाः स्वरः यस्मिन् तत्। सितनखदशनानां सिताः शुभ्रवर्णाः नखाः दशनाश्च येषां तेषां शुभ्रनखदन्तानाम्। वारणानां गजानाम्, रिपुसमरविमर्द्दं शत्रूणां समरे संग्रामे विमर्द्दं मर्दनकारकम् एतत् इदम्, अनेकम् बहु, वृन्दं समूहम्, ते ददामि, दानं करोमि। मालिनीवृत्तम्॥२०॥

**सरलार्थः** - अश्वसहस्रम् अपि न स्वीकरोति याचकः। सः कथयति - स्वल्पकालं यावत् एव अश्वे आरोहणं करिष्यामि। तस्मात् तत् न इच्छामि इति। तदा कर्णः गजसमूहं दातुम् इच्छन् कथयति -

येषां गण्डस्थलानि मदेन सिक्तानि, मदगन्धेन च भ्रमराः समन्तात् राजन्ते, पर्वतमिव येषां गात्रवर्णः, येषां गर्जनं गम्भीरमेघवत्, येषां नखाः दन्ताः च श्वेतवर्णाः, ये च संग्रामे शत्रून् नाशयन्ति, तादृशान् बहून् गजान् ददामि इति।

**व्याकरणविमर्शः -**

- सेव्यमानः - √सेव् + लट् + कर्मणि शानच् + पुंलिङ्गे प्रथमाविभक्त्येकवचने। (षेवृ सेवने)
- षट्पदः - द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः।। इत्यमरः।
- मेघः - अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः। धाराधरो जलधरस्तडित्वान्वारिदोऽम्बुभृत्।। इत्यमरः।

## १८.७) मूलपाठम् अवगच्छाम

**शक्रः — गअ त्ति। मुहुत्तअं आलुहामि णेच्छामि कण्ण! णेच्छामि। [गज इति। मुहूर्तकम् आलुभामि नेच्छामि कर्ण नेच्छामि]**

**कर्णः — किं नेच्छति भवान्। अन्यदपि श्रूयताम्। अपर्याप्तं कनकं ददामि।**

**शक्रः — गह्णिअ गच्छामि। (किञ्चिद् गत्वा) णेच्छामि कण्ण! णेच्छामि। [गृहीत्वा गच्छामि। नेच्छामि कर्ण ! नेच्छामि।]**

**कर्णः — तेन हि जित्वा पृथिवीं ददामि।**

**शक्रः — पुहुवीए किं करिस्सम्। [पृथिव्या किं करिष्यामि।]**

**कर्णः — तेन ह्यग्निष्टोमफलं ददामि।**

**शक्रः — अग्गिड्डोमफलेन किं कय्यं। [अग्निष्टोमफलेन किं कार्यम्।]**

**कर्णः — तेण हि मच्छिरो ददामि। [तेन हि मच्छिरो ददामि।]**

**शक्रः — अविहा अविहा। [अविहा अविहा!]**

**कर्णः — न भेतव्यं न भेतव्यम्। प्रसीदतु भवान्। अन्यदपि श्रूयताम्।**

**अङ्गैः सहैव जनितं मम देहरक्षा**
**देवासुरैरपि न भेद्यमिदं सहस्रैः।**
**देयं तथापि कवचं सहकुण्डलाभ्यां**
**प्रीत्या मया भगवते रुचितं यदि स्यात् ॥२१॥**



## व्याख्या

**श्लोकान्वयः** - अङ्गैः सह एव जनितं मम देहरक्षा सहस्त्रैः देवासुरैः अपि यन्न भेद्यं तथापि कुण्डलाभ्यां सह इदं कवचं यदि भगवते रुचितं स्यात् तर्हि मया प्रीत्या देयम्॥२१॥

**व्याख्या** - अङ्गैः इति- अङ्गैः शरीरावयवैः, सह सार्धम् एव, जनितम् उत्पन्नम्, मम कर्णस्य, देहरक्षा शरीररक्षणम्, सहास्त्रैः आयुधधारिभिः, देवासुरैः देवदानवैः, अपि यन्न भेद्यं भेत्तुं योग्यम्। तथापि कुण्डलाभ्यां कर्णाभरणाभ्याम्, सह साकम्, कवचं वर्म, यदि चेत्, भगवते ब्राह्मणाय रुचितम् अभिलषितम्, स्यात् भवेत्, तदा मया कर्णेन, प्रीत्या सहर्षचित्तेन, देयं दातुं योग्यम्। यद्यपि अनेन कवचेन ममाङ्गरक्षणम् भवति, तथापि यदि इदं भवताम् अभीष्टं स्यात् तर्हि तदपि ददामि इति भावः। वसन्ततिलकावृत्तम्॥२१॥

**सरलार्थः** - कर्णः गजान् दातुम् इच्छति इति श्रुत्वा याचकः कथयति - गजे स्वल्पकालं यावत् आरोहणं करिष्यामि। अतः तत् न इच्छामि। कर्णः तदा कथयति - यथेच्छं सुवर्णं ददामि इति। एतत् श्रुत्वा सुवर्णं गृहीत्वा गमिष्यामि इति वदन् अपि किञ्चित् गत्वा याचकः पुनः कथयति - सुवर्णं न इच्छामि इति। तदा कर्णः उक्तवान् - जित्वा भूमिं ददामि इति। याचकः कथयति - पृथिव्या किं करिष्यामि। नास्ति प्रयोजनं पृथिव्या इत्यर्थः। तदा कर्णः वदति - अग्निष्टोमनामकः यागः स्वर्गफलप्रदः वेदविद्भिः अवश्यम् आचरणीयः, तस्य फलं दातुम् इच्छामि इति। शक्रः कथयति - अग्निष्टोमेन नास्ति मे प्रयोजनम् इति। तदा कर्णः कथयति- तर्हि मम मस्तकं ददामि। अर्थात् मम प्राणाः गृह्यन्ताम् इति। तदा शक्रः - अनर्थः अनर्थः इति कथयति। तत् श्रुत्वा न भेतव्यं न भेतव्यम् इति सान्त्वयति कर्णः। तत् तत् देयं पुनः पुनः वारयन्तं ब्राह्मणं दृष्ट्वा तदभिलषिते कवचकुण्डले दातुं स्वयं कर्णः प्रतिजानीते - मम देहरक्षायै कुण्डलाभ्यां सह कवचं मम जन्मनः एव विद्यते, एतत् च कवचं सहस्रैः देवैः असुरैः च न भेत्तुं योग्यम्। यदि भवान् इच्छति तर्हि कवचकुण्डले अपि दास्यामि।

**व्याकरणविमर्शः** -

- श्रूयताम् - √श्रु+ कर्मणि (य) + लोटि प्रथमपुरुषैकवचने। (श्रु श्रवणे)
- भेतव्यम् - √भी+ तव्यप्रत्यये। (ञिभी भये)
- कनकम् - स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् इत्यमरः।



## पाठगतप्रश्नाः-२

६. कति गाः दातुम् उद्युक्तः कर्णः।

७. कतीनाम् वाजिनां दानं प्रस्तौति कर्णः।

८. केषां वृन्दं दातुम् इच्छति कर्णः।

९. कियत् कनकं दातुम् इच्छति कर्णः।

१०. कीदृशीं पृथिवीं दातुम् इच्छति कर्णः।



## १८.८) मूलपाठम् अवगच्छाम

**शक्रः — (सहर्षम्) देदु, देदु। [ददातु, ददातु।]**

**कर्णः — (आत्मगतम्) एष एवास्य कामः। किं नु खल्वनेककपटबुद्धेः कृष्णस्योपायः। सोऽपि भवतु। धिगयुक्तमनुशोचितम्। नास्ति संशयः (प्रकाशम्) गृह्यताम्।**

**शल्यः — अङ्गराज! न दातव्यं न दातव्यम्।**

**कर्णः — शल्यराज! अलमलं वारयितुम्। पश्य**

**शिक्षा क्षयं गच्छति कालपर्ययात्**
**सुबद्धमूला निपतन्ति पादपाः।**
**जलं जलस्थानगतं च शुष्यति**
**हुतं च दत्तं च तथैव तिष्ठति॥२२॥**

**तस्माद् गृह्यताम् (निकृत्य ददाति।)**

## व्याख्या

**श्लोकान्वयः** - कालपर्ययात् शिक्षा क्षयं गच्छति सुबद्धमूलाः पादपाः निपतन्ति। जलस्थानगतं जलं शुष्यति च। किन्तु हुतं च दत्तं च तथैव तिष्ठति॥२२॥

**व्याख्या** - अनेककपटबुद्धेः, अनेका बह्वी, कपटा चतुरा, बुद्धिः मतिः यस्य, तस्य अनेककपटबुद्धेः कृष्णस्य। अलं वारयितुम् - वारणेन नास्ति प्रयोजनम्, न वारयतु इत्यर्थः।

शिक्षा इति - कालपर्ययात् कालस्य समयस्य पर्ययः विपरिवर्तनं तस्मात्। शिक्षा अध्ययनं क्षयं नाशं गच्छति प्राप्नोति। सुबद्धमूलाः सुबद्धानि दृढतरं निगडितानि मूलानि येषां ते तथाभूताः, पादपाः वृक्षाः, निपतन्ति भूमौ पतिताः भवन्ति। जलस्थानगतं जलस्य स्थानं जलाशयं तत्र गतं प्राप्तं जलाशयस्थं जलं नीरं शुष्यति शुष्कतां प्राप्नोति च। किन्तु यत् हुतम् वैधे आधारभूते अग्नौ समन्त्रं प्रक्षिप्तम्, दत्तम् उचिते देशकाले सत्पात्रे प्रत्यर्पितम्, तत् तथैव अविनश्वररूपेण तिष्ठति वर्तमानः भवति। अतः सर्वेभ्यः वस्तुभ्यः हुतं दत्तं च प्रशस्यतरम् इति भावः। वंशस्थवृत्तम्॥२२॥

**सरलार्थः** - कवचकुण्डलनामश्रवणात् एव शक्रः सहर्षं वदति - ददातु ददातु इति। तदा कर्णः आत्मगततया वक्ति यत् - एष कवचकुण्डले एव स्वीकर्तुम् इच्छति। कपटबुद्धेः कृष्णस्य कार्यम् एतत्। यत् दास्यामि इति मया उक्तं तद्विषये शोकः न कर्तव्यः इति। एवं मनसि विचिन्त्य - गृह्यताम् इति वदति कर्णः। शल्यराजः तं वारयति। परन्तु तद् अगणनयन् कर्णः वदति - कालेन शिक्षा क्षयं गच्छति, दृढमूलाः बृक्षाः अपि कालेन पतन्ति, जलाशयगतं जलं च कालेन शुष्यति, परन्तु दानं, यज्ञे च आहुतं सर्वं यथावत् अविनश्वररूपेण तिष्ठति इति। ततः कर्णः कवचकुण्डले उत्पाट्य शक्राय ददाति।



**व्याकरणविमर्शः -**

- निकृत्य - नि-√कृत् +क्त्वा (ल्यप्) प्रत्यये, उत्पाट्य इत्यर्थः। (कृती छेदने)
- दातव्यम् - √दा + तव्यप्रत्यये। (डुदाञ् दाने)
- निपतन्ति - नि-√पत् + लटि प्रथमपुरुषबहुवचने। (पत्लृ गतौ)
- पादपः - वृक्षो महीरुहः शाखी विटपी पादपस्तरुः इत्यमरः।

## १८.९) मूलपाठम् अवगच्छाम

**शक्रः — (गृहीत्वा आत्मगतम्) हन्त गृहीते एते। पूर्वमेवाहमर्जुनविजयार्थं सर्वदेवैर्यत् समर्थितं तदिदानीं मयानुष्ठितम्। तस्मादहमप्यैरावतमारुह्यार्जुनकर्णयोर्द्वन्द्वयुद्धं पश्यामि।**

**(निष्क्रान्तः।)**

**शल्यः — भो अङ्गराज ! वञ्चितः खलु भवान्।**

**कर्णः — केन?**

**शल्यः — शक्रेण।**

**कर्णः — न खलु। शक्रः खलु मया वञ्चितः। कुतः,**

**अनेकयज्ञाहुतितर्पितो द्विजैः**
**किरीटवान् दानवसङ्घमर्दनः।**
**सुरद्विपस्फालनकर्कशाङ्गुलि-**
**र्मया कृतार्थः खलु पाकशासनः॥२३॥**

## व्याख्या

**श्लोकान्वयः** - द्विजैः अनेकयज्ञाहुतितर्पितः किरीटवान् दानवसंघमर्दनः सुरद्विपास्फालनकर्कशाङ्गुलिः पाकशासनः मया कृतार्थः खलु॥२३॥

**व्याख्या** - अनेकेति- द्विजैः ब्राह्मणैः, अनेकयज्ञाहुतितर्पितः अनेकेषु बहुषु यज्ञेषु मखेषु या आहुतयः ताभिः तर्पितः प्रीणितः, किरीटवान् किरीटः अस्ति अस्येति किरीटवान् मुकुटधारी। दानवसङ्घमर्दनः दानवसङ्घान् दैत्यसमूहान् मर्दयति नाशयति तथाभूतः, सुरद्विपस्य ऐरावतस्य आस्फालनं तैः कर्कशाः अङ्गुलयः यस्य सः ऐरावतसञ्चालनसञ्जातकठिनाङ्गुलीकः। पाकशासनः इन्द्रः, मया कर्णेन, कृतार्थः सफलमनोरथः, कृतः सम्पादितः। ब्राह्मणाः अनेकयज्ञहविषा यं प्रीणयन्ति स शक्रः मत्सकाशात् याचमानः मया पूरितमनोरथः अभूद् इति भावः। वंशस्थवृत्तम्॥२३॥

**सरलार्थः** - कवचकुण्डले गृहीत्वा शक्रः आत्मगततया वक्ति यत् पूर्वमेव अर्जुनस्य जयलाभाय सर्वे देवाः यत् समर्थितवन्तः इदानीं मया तत् कर्म सम्पादितम्। अतः अहम् अर्जुन-कर्णयोः युद्धम्



ऐरावतात् पश्यामि। एवम् उक्त्वा शक्रः निष्क्रान्तः। शल्यः तदा कर्णं वदति यत् इन्द्रः भवन्तं वञ्चितवान् इति। कर्णः तदा कथयति - अहम् इन्द्रेण न वञ्चितः, अपि तु इन्द्रः मया वञ्चितः इति। किमर्थम् इति चेत् - यः यज्ञे आहुतिप्रदानेन बहुभिः ब्राह्मणैः तृप्यते, किरीटधारी यः दानवान् निहन्ति, ऐरावतसञ्चलनेन यस्य अङ्गुलयः कर्कशाः संवृत्ताः, स खलु इन्द्रः अद्य कर्णेन उपकृतः। तस्मात् इन्द्रः एव कर्णेन वञ्चितः इति।

**व्याकरणविमर्शः -**

- गृहीत्वा - √ग्रह + क्त्वाप्रत्यये। (ग्रह उपादाने)
- यज्ञः - यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः इत्यमरः।

## १८.१०) मूलपाठम् अवगच्छाम

**(प्रविश्य ब्राह्मणरूपेण)**

**देवदूतः — भोः कर्ण! कवचकुण्डलग्रहणाज्जनितपश्चात्तापेन पुरन्दरेणानुगृहीतोऽसि। पाण्डवेष्वेकपुरुषवधार्थममोघमस्त्रं विमला नाम शक्तिरियं प्रतिगृह्यताम्।**

**कर्णः — धिग्, दत्तस्य न प्रतिगृह्णामि।**

**देवदूतः — ननु ब्राह्मणवचनाद् गृह्यताम्।**

**कर्णः — ब्राह्मणवचनमिति। न मयातिक्रान्तपूर्वम्। कदा लभेय।**

**देवदूतः — यदा स्मरसि तदा लभस्व।**

**कर्णः — बाढम्। अनुगृहीतोऽस्मि। प्रतिनिवर्ततां भवान्।**

**देवदूतः — बाढम्। (निष्कान्तः)**

**कर्णः — शल्यराज! यावद्रथमारोहावः।**

**शल्यः — बाढम्। (रथारोहणं नाटयतः।)**

**कर्णः — अये! शब्द इव श्रूयते। किं नु खल्विदम्**

**शङ्खध्वनिः प्रलयसागरघोषतुल्यः**
**कृष्णस्य वा न तु भवेत् स तु फाल्गुनस्य।**
**नूनं युधिष्ठिरपराजयकोपितात्मा**
**पार्थः करिष्यति यथाबलमद्य युद्धम्॥२४॥**

**शल्यराज ! यत्रासावर्जुनस्तत्रैव चोद्यतां मम रथः।**

**शल्यः — बाढम्!**

## व्याख्याः

**श्लोकान्वयः -** प्रलयसागरघोषतुल्यः शङ्खध्वनिः कृष्णस्य वा न तु भवेत् स तु फाल्गुनस्य भवेत्। युधिष्ठिरपराजयकोपितात्मा पार्थः अद्य यथाबलं युद्धं करिष्यति इति नूनम्॥२४॥



**व्याख्या** - कवचकुण्डलग्रहणात् कवचं च कुण्डले च कवचकुण्डलानि, तेषाम् ग्रहणात्, जनितपश्चात्तापेन जनितः पश्चात्तापः यस्य, तेन समुत्पन्नखेदेन, शक्रः सन् अपि अहं कर्णसकाशात् प्रतिग्रहणम् अकार्षम् इति पश्चात्तापं कुर्वता, पुरन्दरेण इन्द्रेण। अमोघम् अव्यर्थम्।

शङ्खध्वनिः इति- प्रलयसागरघोषतुल्यः प्रलयसागरः प्रलयकालिकः समुद्रः, तस्य घोषः, तेन तुल्यः सदृशः। शङ्खध्वनिः शङ्खस्य ध्वनिः कम्बुरवः, कृष्णस्य वासुदेवस्य, वा अथवा न तु भवेत् न स्यात्। स तु ध्वनिः फाल्गुनस्य अर्जुनस्य, एव भवितुम् अर्हति। यतः युधिष्ठिरपराजयकोपितात्मा, युधिष्ठिरस्य धर्मराजस्य, पराजयः परिभवः, तेन कोपितः क्रुद्धः, आत्मा मनः, यस्य सः पार्थः पृथापुत्रः अर्जुनः, अद्य सम्प्रति संग्रामे, यथाबलं बलम् अनतिक्रम्य इति यथाबलम् यावच्छक्ति, युद्धं संग्रामं करिष्यति विधास्यति। वसन्ततिलकवृत्तम्॥२४॥

**सरलार्थः** - तस्मिन् समये कश्चित् देवदूतः ब्राह्मणरूपेण प्रविश्य निवेदितवान् यत् - कवचकुण्डलग्रहणात् पश्चात्तापेन शक्रेण कर्णाय पाण्डवेषु एकपुरुषघातिनी विमला नाम शक्तिः प्रदत्ता। परन्तु कर्णः दत्तस्य प्रतिग्रहणं नाङ्गीकरोति। परन्तु ब्राह्मणवचनं तेन न पूर्वं न अतिक्रान्तमिति कारणात् देवदूतेन बोधितः सन् स पुनः शक्तिम् अङ्गीकरोति। पुनश्च तं पृच्छति यत् कदा सा शक्तिः लप्स्यते इति। देवदूतः वदति- यदा स्मरिष्यति तदा लप्स्यते इति। एवं निवेद्य देवदूतः प्रस्थानं करोति। शल्यराजः कर्णेन सह रथम् आरोहतः। तस्मिन्नेव समये शङ्खध्वनिं श्रुत्वा कर्णः वदति- कृष्णस्य अथवा अर्जुनस्य तीव्रः शङ्खध्वनिः श्रूयते। मन्ये युधिष्ठिरस्य पराजयं निशम्य अर्जुनः यथाबलं युद्धं करिष्यति। तस्मात् यत्र अर्जुनस्य रथः विद्यते तत्रैव मम रथं नयतु इति। कर्णस्य आदेशं श्रुत्वा शल्यराजः तथैव आचरति।

**व्याकरणविमर्शः -**

- प्रतिनिवर्तताम् - प्रति-नि- √वृत् + लोटि प्रथमपुरुषैकवचने। (वृतु वर्तने)
- ध्वनिः - शब्दे निनादनिनदध्वनिध्वानरवस्वनाः इत्यमरः।
- सागरः - समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः। उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः।। इत्यमरः।

## १८.११) मूलपाठम् अवगच्छाम

**(भरतवाक्यम्)**

**सर्वत्र सम्पदः सन्तु नश्यन्तु विपदः सदा।**
**राजा राजगुणोपेतो भूमिमेकः प्रशास्तु नः॥२५॥**

**(निष्क्रान्तौ)**

**इति कर्णभारं समाप्तम्।**



## व्याख्या

**श्लोकान्वयः** - सर्वत्र सम्पदः सन्तु सदा विपदः नश्यन्तु, राजगुणोपेतः एकः राजा नः भूमिं प्रशास्तु॥२५॥

**व्याख्या** - सर्वत्र सर्वस्मिन् जगति, सम्पदः सम्पत्तयः, सन्तु तिष्ठन्तु । सदा सर्वदा विपदः विपत्तयः, नश्यन्तु प्रणाशं गच्छन्तु, राजगुणोपेतः राजलक्षणयुक्तः, एकः केवलः, राजा भूपः, राजसिंहः इत्यर्थः, नः अस्माकं भूमिं वसुन्धरां प्रशास्तु प्रकृष्टरूपेण शासनं करोतु। अनुष्टुप् छन्दः॥२५॥

**सरलार्थः** - इदानीम् भरतवाक्येन नाटकस्य समाप्तिः भवति - जगति सर्वत्र सम्पदः भवन्तु, सदा विपदः नश्यन्तु, राजगुणसम्पन्नः कश्चित् राजा पृथिव्याः शासनं करोतु इति।

**व्याकरणविमर्शः -**

- प्रशास्तु - प्र-√शास् + लोटि प्रथमपुरुषैकवचने। (शासु अनुशिष्टौ)
- सम्पद् - अथ सम्पदि। सम्पत्तिः श्रीश्च लक्ष्मीश्च इत्यमरः।
- भूमिः - भूभूमिरचलानन्ता रसा विश्वम्भरा स्थिरा। धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः।। सर्वंसहा वसुमतिः वसुधोर्वी वसुन्धरा। गोत्रा कुः पृथिवी पृथ्वीक्ष्माऽवनिर्मेदिनी मही।। इत्यमरः।



## पाठगतप्रश्नाः-३

११. कवचकुण्डलदानात् अर्जुनः केन वारितः।

१२. कालविपर्ययात् किं क्षयं गच्छति।

१३. किं चिरं तिष्ठतीति कर्णः आह।

१४. पुरन्दरानुग्रहात् कर्णाय कां शक्तिं ददाति देवदूतः।

१५. देवदूतः केन प्रेषितः।

१६. कः फाल्गुनः।

## १८.१२) नाटकेऽस्मिन् प्रयुक्तानां छन्दसां लक्षणानि -

१. अनुष्टुप् - श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघुपञ्चमम्।
द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः।।

२. उपजाति - अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः।

३. शार्दूलविक्रीडित - सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्।

४. मालिनी - ननमयययुतेयं मालिनी भोगिलोकैः।



५. वसन्ततिलका - उक्ता वसन्ततिलका तभजा जगौ गः।

६. प्रहर्षणी - त्र्याशाभिर्मनजरगा प्रहर्षणीयम्।

७. वंशस्थ - जतौ तु वंशस्थमुदीरितं जरौ।



## पाठसारः

- रथम् आरुह्य अर्जुनस्य समीपं स्वस्य रथं नेतुं शल्यराजं निर्दिदेश कर्णः। तदा नेपथ्ये 'महत्तरां भिक्षां याचे' इति कस्यचित् कण्ठरवं श्रुत्वा कर्णः उवाच यत् एषः कण्ठस्वरः श्रीमतः वीर्यवतः च ब्राह्मणस्य, यतो हि धीरनिनादं कण्ठस्वरमिमम् आकर्ण्य अश्वाः चित्रार्पिताः इव स्थिराः संवृत्ताः इति। ततः स विप्रम् आहूतवान्।
- तदा प्रविशति ब्राह्मणरूपधारी शक्रः। शक्रः कथयति- भोः कर्ण, महत्तरां भिक्षां याचे इति। तदा कर्णः तस्य आशीर्वादलाभाय तं प्रशस्य नमस्करोति। शक्रस्तु आत्मगततया चिन्तयति यत् यदि वदामि दीर्घायुः भव इति तर्हि कर्णः दीर्घायुः भविष्यति, यदि तन्न वदामि तर्हि मूढः इति चिन्तयति, तस्मात् किं वदेयमिति न शक्नोमि स्थिरीकर्तुम्। प्रकाश्ये वक्ति यत् हे कर्ण, सूर्य इव, चन्द्र इव, हिमवान् इव, सागर इव तिष्ठतु ते यशः इति। एतद् आकर्ण्य कर्णः वक्ति यत् हे भगवन्, भवता दीर्घायुः भव इति किं न वक्तव्यम्? अथवा मम कृते एतदेव शोभनम्। यतो हि - केवलं मानवैः धर्मः एव यत्नेन पालनीयः, श्रियः तु सर्पस्य जिह्वा इव चञ्चलाः भवन्ति, तस्मात् प्रजापालनमात्रबुद्ध्या हतेषु देहेषु अपि गुणाः स्थिराः तिष्ठन्ति। वदतु भगवन्, किम् इच्छसि, किम् अहम् ददामि इति। एतत् श्रुत्वा शक्रः वदति यत् महत्तरां भिक्षां याचे इति। कर्णः उक्तवान्- महत्तरां भिक्षां भवते दास्यामि। किं भवान् गोसहस्रम् इच्छति? इति। शक्रः तन्न इच्छति। तस्मात् पुनः कथयति- किं काम्बोजजातं बहुसहस्रम् अश्वम् इच्छति? किं वा बहून् हस्तिनः इच्छति? किम् अपर्याप्तं कनकम् इच्छति? किं वा पृथिवीम् इच्छति? अथवा किम् अग्निष्टोमफलम् इच्छति? एतेषु किमपि न इच्छति शक्रः। तस्मात् कर्णः कथयति - किम् मम शिरः इच्छति भवान्? इति। तदपि न इच्छति शक्रः। तदा सहस्रैः देवासुरैः अपि अभेद्यम् कवचं कुण्डलाभ्यां सह किम् इच्छति भवान्? इति पृष्टवान् कर्णः। तदा शक्रः हर्षेण ददातु ददातु इति उक्तवान्। एतद् कृष्णस्य कूटकार्यमिति विजानन् अपि कर्णः शल्यराजस्य निषेधम् अश्रुत्वा शक्राय कवचकुण्डलं दत्तवान्। उक्तवान् च- कालेन शिक्षा क्षयं याति, वृक्षा अपि कालेन निपतन्ति, जलस्थानगतं जलं च शुष्यति, परन्तु यज्ञे हुतं, दत्तं च न कदापि नाशमेति, सर्वदा तथैव तिष्ठति इति। शक्रः तद् गृहीत्वा हर्षेण प्रस्थितः। शल्यराजः उक्तवान् - भवान् शक्रेण वञ्चितः खलु? कर्णः उक्तवान् यत् शक्र एव तेन वञ्चितः। कुतः?- यः यज्ञे आहुतिप्रदानेन बहुभिः ब्राह्मणैः तृप्यते, किरीटधारी यः दानवान् निहन्ति, स खलु इन्द्रः अद्य कर्णेन उपकृतः।



- अस्मिन् समये देवदूतः तत्र समागम्य निवेदितवान् यत् कवचकुण्डलग्रहणात् पश्चात्तापेन शक्रेण कर्णाय पाण्डवेषु एकपुरुषघातिनी विमला नाम शक्तिः प्रदत्ता। परन्तु कर्णः दत्तस्य प्रतिग्रहणं नाङ्गीकरोति। परन्तु ब्राह्मणवचनं तेन पूर्वं न अतिक्रान्तमिति कारणात् देवदूतेन बोधितः सन् स पुनः शक्तिम् अङ्गीकरोति। पुनश्च तं पृच्छति यत् कदा सा शक्तिः लप्स्यते इति। देवदूतः वदति- यदा स्मरिष्यति तदा लप्स्यते इति। एवं निवेद्य देवदूतः प्रस्थानं करोति। शल्यराजः कर्णेन सह रथम् आरोहति। तस्मिन्नेव समये शङ्खध्वनिं श्रुत्वा कर्णः वदति- कृष्णस्य अथवा अर्जुनस्य तीव्रः शङ्खध्वनिः श्रूयते। मन्ये युधिष्ठिरस्य पराजयं निशम्य अर्जुनः यथाबलं युद्धं करिष्यति। तस्मात् यत्र अर्जुनस्य रथः विद्यते तत्रैव मम रथं नयतु इति। शल्यराजः तथैव आरचति। तदा भरतवाक्यं श्रूयते- संसारे सर्वत्र सर्वदा सम्पदः सन्तु, विपदश्च विनश्यन्तु। राजगुणसम्पन्नः राजा पृथ्वीं प्रशास्तु इति। ततः कर्णः शल्यश्च निष्क्रामतः। नाटकञ्च समाप्तिं गच्छति।



## पाठान्तप्रश्नाः

१. कर्णः कया पाण्डवहननात् वारितः?

२. कवचकुण्डलयोः प्रतिदानरूपेण इन्द्रः कर्णाय किम् प्रदत्तवान्?

३. कर्णः ब्राह्मणाय किम् किम् दातुम् इच्छति स्म।

४. हुतं च दत्तं तथैव तिष्ठति- कर्णवाक्यमिदं विस्तार्यताम्?

५. कर्णस्य कवचकुण्डलदानं संक्षेपेण लिखत।

६. वस्तुतः शक्रः एव कर्णेन वञ्चितः इत्यत्र कर्णस्य का युक्तिः।

७. किं विचिन्त्य कर्णः कवचकुण्डले ददाति।

८. संक्षेपेण नाट्यकारपरिचयः विज्ञाप्यताम्।

९. कवचं कुण्डते कीदृशानि इति कर्णः वदति।

१०. स्तम्भयोः स्थितानां शब्दानां कस्य केन सम्बन्धः इति रेखायोजनेन प्रदर्शयत।

| | |
|---|---|
| १) कर्णः | धनञ्जयः |
| २) शल्यः | नागकेतुः |
| ३) दुर्योधनः | जामदग्न्यः |
| ४) अर्जुनः | पुरन्दरः |
| ५) परशुरामः | दुर्योधनः |
| ६) नागकेतुः | सारथिः |
| ७) शक्रः | अङ्गेश्वरः |





## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. सूर्य इव, चन्द्र इव, हिमवान् इव, सागर इव तिष्ठतु ते यशः।

२. विप्रस्य।

३. दीर्घायुः।

४. कर्णस्य।

५. नृपाणां धनम् सर्पस्य जिह्वा यथा चपला तथा चपलम् इति।

**उत्तराणि-२**

६. सहस्रम्।

७. सहस्रस्य

८. वारणानाम्।

९. अपर्याप्तम्।

१०. जित्वा समग्रां पृथिवीम्।

**उत्तराणि-३**

११. शल्येन।

१२. शिक्षा।

१३. हुतं च दत्तम्।

१४. विमला।

१५. पुरन्दरेण।

१६. अर्जुनः।

॥ इति अष्टादशः पाठः ॥



# भारविविरचितं किरातार्जुनीयम्

## भूमिका

भारतीयसंस्कृतौ संस्कृतसाहित्यस्य अवदानम् अभूतपूर्वम्। साहित्यशब्दस्यैव काव्यम् इति पर्यायः भवति। जगति काव्यस्य प्रादुर्भावः कुतः इति चेत् - रामादिवत् प्रवर्तितव्यं न तु रावणादिवत् इति सम्पादनाय एव। तत्र काव्यस्य महिम्नः का कथा? काव्ये सर्वस्यापि विषयस्य सारः वर्तते। यतो हि काव्ये वेदानां तथा उपनिषदाम् अपि वर्णनं दृश्यते। किञ्च, वेदान्तादिशास्त्राणामपि बहवः सिद्धान्ताः काव्येषु दृश्यन्ते। प्रायः एवं काव्यशास्त्रे सर्वाणि एव वस्तूनि सततं विराजन्ते। अत एव "काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्"इति सुभाषितं सुप्रसिद्धम् अस्ति।

स्वरूपानुसारेण काव्यं द्विविधं श्रव्यकाव्यं दृष्टकाव्यं चेति। तत्र प्रबन्ध-मुक्तकभेदेन श्रव्यकाव्यमपि द्विविधम्। प्रबन्धकाव्यं द्विधा विभज्यते- महाकाव्यं खण्डकाव्यं चेति। अपि च तत्र शैलीभेदेन काव्यं त्रिविधं - पद्यकाव्यं गद्यकाव्यं चम्पूकाव्यं च।

संस्कृतकाव्यशास्त्रे साहित्यिकानां नये चतुर्णां पुरुषार्थाणां प्राप्तिरेव काव्यस्य प्रयोजनम्। तत्र आचार्यः मम्मटः काव्यस्य षट् प्रयोजनानि कथयति -

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।

सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥"इति अर्थात् यशसः प्राप्तये, अर्थलाभाय, सामाजिक-व्यवहाराणां शिक्षायै, विपत्तेः नाशाय, रसानन्दस्य अनुभवाय, तथा च स्त्री यथा उपदिशति तद्वत् उपदेशदानाय काव्यम् उपादेयम्।

"महेश्वरः शिवः किरातवेषं धृत्वा अर्जुनेन सह युद्धवान्"इति प्रसिद्धा महाभारतकथा प्रायः सर्वेषां विदिता अस्ति। महाकविः भारविः महाभारतस्य वनपर्वणः प्रसङ्गमेकं गृहीत्वा किरातार्जुनीयम् इति प्रसिद्धम् एकं महाकाव्यं विरचितवान्। कविः भारविः महाभारतस्य अन्धानुसरणं न कृतवान्। अपि तु स्वप्रतिभया अभिनवरूपेण ताम् एव कथां वर्णितवान्। किरातार्जुनौ अधिकृत्य एव कविना अयं ग्रन्थो विरचितः। अस्मिन् ग्रन्थे भारतीयसंस्कृतिः, शिष्टाचारः, राजनीतेः चमत्कारः , तथा स्त्रीस्वभावानां सम्यक् निदर्शनम् इत्येवं नैके विषयाः दृग्गोचराः भवन्ति। किरातार्जुनयोः चरित्रम् एव ग्रन्थेऽस्मिन् प्रधानम्। अतः ग्रन्थस्यास्य किरातार्जुनीयम् इति अन्वर्थं नाम। महाकवेः भारवेः रचनाशैली लोके विद्वद्भिः भृशं समाद्रियते। तत्र प्रमाणं भवति प्रसिद्धेषु पञ्चसु महाकाव्येषु अन्यतमं किरातार्जुनीयम् इति महाकाव्यम्। तथाहि "भारवेरर्थगौरवम्" किञ्च "नारिकेलफलसम्मितं वचः"इति प्रसिद्धिः लोके। महाकाव्यम् इदम् अष्टादशसु सर्गेषु विभक्तम्।

तत्र आदौ प्रथमे सर्गे द्वैतवने निवसतः युधिष्ठरस्य समीपे ब्रह्मचारिवेषधारी वनेचरः दुर्योधनस्य शासनकौशलं श्रावयति। तत् श्रुत्वा च युधिष्ठिरं युद्धार्थम् उत्तेजयितुं द्रौपदी ओजगुणपूर्णम् उपालम्भनं करोति। अस्मिन् सर्गे षट्चत्वारिंशत् श्लोकाः सन्ति। तेषु त्रिंशत् श्लोकाः अस्माभिः परिच्छेदरूपेण संगृहीताः। परिच्छेदे अस्मिन् वस्तुतः चराणां स्वभावः कथं भवेत् तथा तैः किं विधेयम् इत्येव उपात्तम्। अपि च द्रौपदीमुखेन स्त्रीस्वभावानां भव्यं चित्रं चित्रितम्। अत्र त्रिंशत्सु श्लोकेषु वंशस्थ-छन्दः वर्तते। तस्य च लक्षणं भवति जतौ तु वंशस्थमुदीरितंजरौ इति।

# १९

# वनेचरस्य चरानुरूपं वचनम्

## प्रस्तावना

हिन्दुसंस्कृतौ महाभारतस्य प्रभावः आबहोः कालादेव अमूल्यत्वेन गण्यते। शास्त्रेषु महाभारतविषये "भारतं पञ्चमो वेद" इति प्रसिद्धिः विद्यते। अस्य रचयिता महर्षिः कृष्णद्वैपायन-वेदव्यासः ग्रन्थविषये स्वयम् आह- 'यन्नेहास्ति न कुत्रचित्' इति। अर्थात् यस्मिन् विषये चर्चा ग्रन्थेऽस्मिन् न विहिता, तस्मिन् विषये चर्चा कुत्रापि न लब्धुं शक्या इति। अस्यैव ग्रन्थस्य वनपर्वणः कथा महाकविना भारविना किरातार्जुनीये महाकाव्ये संगृहीता। तत्र अक्षक्रीडायाः नियमानुसारं पराजितः युधिष्ठिरः राज्यभ्रष्टः सन् वने भ्रातृभिः द्रौपद्या च सह निवसति स्म। स दुर्योधनस्य प्रजापालनस्य नीतिं विज्ञातुं वनेचरं हस्तिनापुरं प्रेषितवान्। स च चरः तत्र गत्वा सर्वम् उदन्तं कथं विज्ञातवान्। किञ्च, प्रत्यागत्य च ततः राज्ञे युधिष्ठिराय सर्वं कया रीत्या निवेदितवान् इत्यादिकं सर्वं वयं पाठेऽस्मिन् पठिष्यामः। राज्ञां चराः तेषां नेत्रसदृशाः भवन्ति अतः ते यदि मिथ्या भाषेरन् तर्हि कीदृशी हानिः स्यादिति तु अनुमातुं शक्यते प्रायः युष्माभिः। अतः तैः कथं सत्यं कष्टदायकमपि वचनं राज्ञः समीपे उपस्थापनीयमिति सप्रसङ्गं ज्ञास्यामः पाठेऽस्मिन्। वस्तुतः राज्ञां चराः कथं भवेयुः इति अस्मात् पाठात् भवन्तः ज्ञातुं प्रभवन्ति।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- चराः राजकार्यं साधयितुं कथं प्रयतते इति ज्ञास्यति।
- राज्ञः तथा अमात्यानां मध्ये सम्पर्कः कथं भवेत्।
- हितैषिणः चराः कीदृशाः भवन्ति इति ज्ञास्यति।
- भारवेः अर्थगौरवविषये ज्ञास्यति।
- पाठम् अमुं पठित्वा अलङ्कारविषये ज्ञानं भविष्यति।
- भवतां छन्दोज्ञानम् अपि वर्धिष्यते।

## १९.१) मूलपाठः

**श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।**
**स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः ।। ११ ।।**



कृतप्रणामस्य महीं महीभुजे जितां सपत्नेन निवेदयिष्यतः ।
न विव्यथे तस्य मनो न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः ।। १२ ।।

द्विषां विघाताय विधातुमिच्छतो रहस्यनुज्ञामधिगम्य भूभृतः ।
स सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थामिति वाचमाददे ।। १३ ।।

क्रियासु युक्तैर्नृप चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः ।। १४ ।।

स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः ।
सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः ।। १५ ।।

निसर्गदुर्बोधमबोधविक्लवाः क्व भूपतीनां चरितं क्व जन्तवः ।
तवानुभावोऽयमवेदि यन्मया निगूढतत्त्वं नयवर्त्म विद्विषाम् ।। १६ ।।

## ११.२) साम्प्रतम् मूलपाठम् अवगच्छाम

**श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्।**
**स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः।।१**

**अन्वयः** - कुरूणाम् अधिपस्य श्रियः पालनीं प्रजासु वृत्तिम् वेदितुम् यम् (वनेचरं युधिष्ठिरः) अयुङ्क्त। वर्णिलिङ्गी विदितः (सन्) स वनेचरः द्वैतवने युधिष्ठिरं समाययौ।

**अन्वयार्थः** - कुरूणां निवासाः जनपदविशेषाः कुरवः तेषां कुरूणाम्, अधिपस्य अधिपतेः कुरुदेशस्य भूपतेः राज्ञः दुर्योधनस्य, श्रियः राजसम्पदः राजलक्ष्म्याः, पालनीं पाल्यते रक्ष्यते यया ताम्, पालनकारिणीं सुप्रतिष्ठापिकाम्, प्रजासु जनेषु विषये प्रकृतिषु च, वृत्तिं व्यवहारं वार्ताम्, यादृशेन व्यवहारेण। प्रजाः पालयतः भूपतेः प्रतिष्ठा भवति, राज्ञः दुर्योधनस्य तादृशः व्यवहारः वर्तते न वा इति वेदितुं विज्ञातुम्, यं वनेचरं वने चरति इति वनेचरः तं द्वैतवनस्थं कञ्चित् किरातम्, अयुङ्क्त नियुक्तवान् संयोजितवान् राज्यवृत्तान्तं सम्यक् ज्ञातुं गुप्तचररूपेण हस्तिनापुरं प्रेषितवान् इत्यर्थः, वर्णिलिङ्गी वर्णः प्रशस्तिः अस्य अस्ति इति वर्णी, तस्य वर्णिनः लिङ्गं चिह्नं विद्यते यस्य स वर्णिलिङ्गी ब्रह्मचारिवेषधारी वनेचरः, विदितः वेदनं ज्ञानम् अस्य अस्ति इति ज्ञानवान्, परवृत्तान्तज्ञः (सन्) शत्रोः दुर्योधनस्य सकलवृत्तान्ताभिज्ञः इत्यर्थः,, द्वैतवने रागद्वेषविरहिते द्वैतनामके शान्ते तपोवने, युधिष्ठिरं युधि रणे तिष्ठति इति युधिष्ठिरः, तं पाण्डुपुत्रं ज्येष्ठपाण्डवं धर्मराजम्, समाययौ समागतवान् संप्राप्तवान्, तस्य समीपं समुपस्थितः इत्यर्थः।

**सरलार्थः** - दुर्योधनेन द्यूतक्रीडायां छलेन पराजितः युधिष्ठिरः सर्वस्वं हारयित्वा वनवासे निवसति स्म। तदा युधिष्ठिरस्य मनसि कथं दुर्योधनः राज्यं करोति इति विचारः उत्पन्नः। यतः राज्ये



प्रजाः यदि प्रसन्नाः तर्हि राज्ञः राजलक्ष्मीः सुप्रतिष्ठिता भवति। ततः स दुर्योधनस्य राज्यशासनपद्धतिं ज्ञातुं वनेचरं प्रेषितवान्। स च ब्रह्मचारिवेषं धृत्वा तत्र गत्वा सर्वं ज्ञातवान्। ततः स चरः युधिष्ठिराय सर्वं कथयितुं युधिष्ठिरसमीपं द्वैतवनं समागतः।

**तात्पर्यार्थः -** प्रस्तुते अस्मिन् श्लोके गुप्तचरस्य माहात्म्यस्य अतिशयेन प्रतिपादनं भवति। राज्यभ्रष्टः युधिष्ठिरः वने भ्रातृभिः द्रौपद्या च सह निवसति। स दुर्योधनस्य प्रजापालनस्य नीतिं विज्ञातुं वनेचरं हस्तिनापुरं प्रेषितवान्। तत्र गत्वा सर्वं यथायथं च ज्ञात्वा स किरातः युधिष्ठिरं प्रति द्वैतवनं समागतवान्।

**व्याकरणविमर्शः -**

- वेदितुम् - विद्-धातोः तुमुन्-प्रत्यये वेदितुम् इति रूपम्।
- युधिष्ठिरः - युधि स्थिरः इति युधिष्ठिरः।
- वनेचरः - वने चरति इति वनेचरः।
- अयुङ्क्त – युज्-धातोः लङि प्रथमपुरुषैकवचने अयुङ्क्त इति रूपम्।
- समाययौ - सम्-आङ्-पूर्वकात् या-धातोः लिटि प्रथमपुरुषैकवचने समाययौ इति रूपम्।

**प्रयोगपरिवर्तनम् -**

- कुरूणाम् अधिपस्य श्रियः पालनीं प्रजासु वृत्तिं वेदितुं (युधिष्ठिरेण) यः अयुज्यत, वर्णिलिङ्गिना तेन वनेचरेण द्वैतवने युधिष्ठिरः समायये।

**अलङ्कारालोचना -**

- "वने वनेचरः"-इत्यत्र वृत्त्यनुप्रासः अलङ्कारः अस्ति। वकारनकारयोः असकृत् आवृत्तिः अत्र हेतुः।

**कोषः -**

- श्रीः - "लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया"इत्यमरः।



## पाठगतप्रश्नाः-१

१. वनेचरः कुत्र समाययौ।

२. वनेचरः कं समाययौ।

३. युधिष्ठिरः किं वेदितुं वनेचरम् अयुङ्क्त।

४. वनेचर-शब्दस्य कः अर्थः।

५. वर्णिलिङ्गी इति कस्य विशेषणम्।



**कृतप्रणामस्य महीं महीभुजे जितां सपत्नेन निवेदयिष्यतः।**
**न विव्यथे तस्य मनो न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः।।२**

**अन्वयः** - कृतप्रणामस्य सपत्नेन जितां महीं महीभुजे निवेदयिष्यतः तस्य मनः न विव्यथे। हि हितैषिणः मृषा प्रियं प्रवक्तुं न इच्छन्ति।

**अन्वयार्थः** - कृतप्रणामस्य कृतः विहितः प्रणामः नमस्कारः येन तस्य, अनेन भृत्यस्य विनयः सूच्यते, सपत्नेन शत्रुणा दुर्योधनेन, जितां (छलेन) गृहीतां वशीकृताम्, पुरा द्युतक्रीडया कपटेन छलेन अधुना, महीं पृथिवीम् राज्यम्, महीभुजे भूपतये राज्ञे युधिष्ठिराय, निवेदयिष्यतः विज्ञापयिष्यतः कथयिष्यतः, तस्य पूर्वं प्रेषितस्य वनेचरस्य किरातस्य गुप्तचरस्य, मनः चित्तं हृदयम्, न नहि, विव्यथे व्यथितम् दुःखितम् अभवत् इत्यर्थः, शत्रुणा राज्यं विजित्य यथाविधि प्रतिपालितम् इति एवम् अप्रियं राज्ञे कथं निवेदयामि इति विचिन्त्य, स चञ्चलः न जातः। व्यथाभावे कारणं वदति - हि यतः यस्मात् कारणात्, हितैषिणः प्रभुकल्याणकामिनः प्रभुविजयाभिलाषिणः भृत्याः, (कदापि) मृषा मिथ्या असत्यम् अलीकम्, प्रियं मधुरं मनोहरं श्रवणसुखदं (वचः वचनम्), प्रवक्तुं निवेदयितुं कथयितुम् अभिधातुम्, (भ्रमाद् अपि) न नहि, इच्छन्ति वाञ्छन्ति अभिलषन्ति।

**सरलार्थः** - वनेचरः प्रजासु दुर्योधनस्य व्यवहारं ज्ञात्वा वनं प्रत्यागतवान्। ततः युधिष्ठिरं प्रणम्य स दुर्योधनेन वशीकृतस्य राज्यस्य शासनविधिं यथायथं वक्तुम् उद्यतः। किन्तु कथं राज्ञे अप्रियं निवेदयामि इति विचिन्त्य तस्य मनः न व्यथितम्। अप्रियसत्यकथनम् एव हितैषिणां चराणां कर्तव्यम्। तत् प्रियं वा भवतु अप्रियं वा। यतो हि प्रभोः हितकारिणः भृत्याः कदापि मनसः तुष्टये मिथ्या न भाषन्ते। तेषां सत्यकथनम् एव परो धर्मः।

**तात्पर्यार्थः** - प्रस्तुते अस्मिन् श्लोके गुप्तचरस्य दूतस्य गुणाः वर्णिताः। ते च गुणाः चतुर्विधाः - चतुरता, स्फूर्तिः, सत्यवादिता, तर्कश्च। स्वामिनः हितसम्पादनम् एव गुप्तचरस्य परमं प्रयोजनम्। अतः नीतिविषये राज्ञः सफलता अधिकांशतः दूतम् एव अवलम्ब्य वर्तते।

**व्याकरणविमर्शः -**

- विव्यथे - व्यथ्-धातोः लिट्लकारे विव्यथे इति रूपम्। व्यथितम् इत्यर्थः।
- कृतप्रणामस्य - कृतः प्रणामः येन सः कृतप्रणामः इति बहुव्रीहिसमासः, तस्य कृतप्रणामस्य।
- महीभुजे - महीं भुनक्ति इति महीभुक्, तस्मै महीभुजे।
- हितैषिणः - हितम् इच्छन्ति इति हितैषिणः।

**सन्धिकार्यम्-**

- मनो न = मनः + न (विसर्गसन्धिः)।

**प्रयोगपरिवर्तनम् -**

- कृतप्रणामस्य सपत्नेन जितां महीं महीभुजे निवेदयिष्यतः तस्य मनसा न विव्यथे, हि हितैषिभिः मृषा प्रियं प्रवक्तुं न इष्यते।

**अलङ्कारालोचना -**



- अत्र हितैषिणः मृषा प्रियं वक्तुं न इच्छन्ति इति वाक्यार्थस्य पूर्ववाक्यसमर्थकतया अर्थान्तरन्यासः अलङ्कारः।

**कोषः -**

- मही - "गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही"इत्यमरः।



## पाठगतप्रश्नाः-२

६. के मृषा प्रवक्तुं न इच्छन्ति।

७. कस्य मनः न विव्यथे।

८. हितैषिणः कीदृशं वचनं प्रवक्तुं न इच्छन्ति।

९. महीभुजे इत्यनेन कः विशेषितः।

१०. हितैषिणः शब्दस्य कः अर्थः।

---

**द्विषां विघाताय विधातुमिच्छतो रहस्यनुज्ञामधिगम्य भूभृतः।**
**स सौष्ठवौदार्यविशेषशालिननीं विनिश्चितार्थामिति वाचमाददे।।३**

**अन्वयः -** स द्विषां विघाताय विधातुम् इच्छतः भूभृतः रहसि अनुज्ञाम् अधिगम्य सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थाम् इति वाचम् आददे।

**अन्वयार्थः -** सः वनेचरः, द्विषां शत्रूणाम् दुर्योधनादिकौरवाणाम्, विघाताय विनाशाय उन्मूलनाय, विधातुं विधानम् व्यापारं कर्तुम्, येन केन उपायेन शत्रोः संहरणं भवेद् इति रूपेण इच्छतः अभिलषतः कामनां कुर्वतः, भूभृतः भूपतेः राज्ञः युधिष्ठिरस्य, रहसि एकान्ते विजने, अनुज्ञाम् आज्ञाम् कटुयथार्थकथनविषये स्वीकृतिम्, अधिगम्य प्राप्य लब्ध्वा, सौष्ठवौदार्यविशेषशालिनीं सुष्ठु सुन्दरम् तस्य भावः सौष्ठवं सुमधुरपदविन्यासः, उदारस्य सरलस्य भावः औदार्यम् ललितार्थप्रतिपादनम्, सौष्ठवं च औदार्यं च सौष्ठवौदार्ये, ताभ्यां विशेषेण अतिशयेन या शालते शोभते तच्छीला, ताम्। विनिश्चितार्थां सुस्पष्टार्थां विशेषरूपेण प्रकाशितार्थाम्, प्रमाणतः निणीतार्थाम्, इति एवं रूपां (वक्ष्यमाणरूपाम्) वाचं वाणीं वचनम्, आददे स्वीकृतवान् स्वीचकार उक्तवान्।

**सरलार्थः -** वनेचरः शत्रूणां विनाशसाधनाय उपायं चिन्तयतः राज्ञः युधिष्ठिरस्य आज्ञां प्राप्तवान्। ततः स निर्जनप्रदेशे तदानीं यत् वक्तव्यं तत् सुमधुरया भाषया वक्तुम् आरब्धवान्।

**तात्पर्यार्थः -** कथं दुर्योधनः राज्यं करोति, कथं च पराजितो भविष्यति इति एतत् सर्वं वृत्तान्तं ज्ञातुं वनेचरः हस्तिनापुरं गतवान् आसीत्। प्रस्तुते अस्मिन् श्लोके हस्तिनापुरतः प्रत्यागतः वनेचरः

युधिष्ठिरस्य आज्ञां प्राप्य युधिष्ठिरं प्रति एकान्ते कथं शब्दार्थचमत्कारसहितं वचनं वक्तुं प्रवृत्तः तत् सर्वं वर्णितम् ।

**व्याकरणविमर्शः -**

- भूभृतः - भुवं बिभर्ति इति भूभृत्, तस्य भूभृतः।
- विनिश्चितार्थाम् - विशेषेण निश्चितः विनिश्चितः इति तृतीयातत्पुरुषः, विनिश्चितः अर्थः यस्याः सा विनिश्चितार्था इति बहुव्रीहिसमासः, तां विनिश्चितार्थाम् इति बहुव्रीहिसमासः।
- आददे - आ-दा-धातोः आत्मनेपदिनः लिटि प्रथमपुरुषैकवचने रूपम्।
- इच्छतः - इष्-धातोः शतरि षष्ठ्येकवचने रूपम्।

**सन्धिकार्यम्-**

- रहस्यनुज्ञाम् = रहसि + अनुज्ञाम् (यण्-सन्धिः)।

**प्रयोगपरिवर्तनम् -**

- रहसि तेन द्विषां विघाताय विधातुम् इच्छतः भूभृतः अनुज्ञाम् अधिगम्य सौष्ठवौदार्यविशेषशालिनी विनिश्चितार्था इति वाक् आददे।

**अलङ्कारालोचना -**

- अत्र वृत्यनुप्रासालङ्कारः अस्ति। वकार-तकारयोः असकृत् आवृत्तिः अत्र कारणम्।

**कोषः -**

- रहः - "विविक्तविजनक्षत्रनिःशलाकास्तथा रहः" इत्यमरः।



## पाठगतप्रश्नाः-३

११. कः सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थां वाचम् आददे।

१२. रहसि शब्दस्य कः अर्थः।

१३. वनेचरः किम् अधिगम्य वाचम् आददे।

१४. युधिष्ठिरः किमर्थं विधातुम् इच्छति।

१५. वनेचरः कीदृशं वाचम् आददे।

---

**क्रियासु युक्तैर्नृप! चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः।**
**अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः।।४**

**अन्वयः** - हे नृप! क्रियासु युक्तैः अनुजीविभिः चारचक्षुषः प्रभवः न वञ्चनीयाः। अतः असाधु वा साधु क्षन्तुम् अर्हसि। हितं मनोहारि च वचः दुर्लभम् (भवति)।



**अन्वयार्थः** - हे नृप! नॄन् जनान् पाति रक्षति इति नृपः, तत्सम्बोधने हे नरेश! युधिष्ठिर! क्रियासु कर्तव्यविषयेषु, युक्तैः नियुक्तैः, अनुजीविभिः चरैः चरन्ति नानादेशम् इति चराः, चारचक्षुषः चारनयनाः, प्रभवः स्वामिनः, न, वञ्चनीयाः प्रतारणीयाः, नृपाः परराष्ट्रपरिज्ञाने चरान् नियुज्य सर्वं यथायथं जानन्ति, तस्मात् चरा एव तेषां नयनवत्। अतः अस्मात् कारणात्, असाधु असम्यक् अप्रियम्, वा, साधु सम्यक् प्रियम्, क्षन्तुं सोढुम्, अर्हसि योग्योऽसि। हितं परिणामे कल्याणकरम्, मनोहारि सद्यः प्रियम्, च वचः वचनम्, दुर्लभं दुःखेन लब्धुं शक्यं, प्रायशः असुलभम् इत्यर्थः। अतः भवता श्रोतव्यमेव।

**सरलार्थः** - हे राजन्! कस्मिन् अपि कर्मणि नियुक्तैः सेवकैः स्वस्वामिनां प्रतारणा न करणीया। यतः स्वामिनः चारनयनाः भवन्ति। अर्थात् कश्चित् नयनवान् पुरुषः यत् नयनेन पश्यति तदेव प्रमाणम् इति वदति। एवं चरेण यत् कथ्यते तदेव तेषां प्रमाणं भवति। सर्वथा सुप्रियं वचनं दुर्लभमेव। तस्मात् प्रियम् अप्रियं वास्तु धैर्यम् अवलम्ब्य श्रोतव्यम्।किञ्च समीचीनम् असमीचीनं यद् वा वदामि तदर्थं क्षन्तव्यः। यतः एकम् एव वाक्यं हितकरं मधुरं च उभयं प्राप्तुं न शक्यते।

**तात्पर्यार्थः** - प्रस्तुते श्लोके अस्मिन् चरस्य कर्तव्यता निरूप्यते। कार्ये नियुक्तैः सेवकैः प्रभवे सत्यम् एव वक्तव्यम्। यतो हि तादृशैः सेवकैः स्वामिनः नयनवन्तो भवन्ति। मिथ्याभाषिभिः सेवकैः नृपाः अन्धा भवन्ति। तस्मात् यथा अन्धाः कूपे पतन्ति तथा ते शत्रुजाले पतन्ति। किञ्च हितं वाक्यं सत्यम् अपि सर्वदा प्रियं न भवन्ति। चरस्य सत्यं श्रुत्वा स्वामी क्रुद्धः न भवेत्। तर्हि चरः कदापि सत्यं न वदिष्यति। तथा सति राज्यस्य नाशः भवेत्। तस्मात् सेवकेन सर्वदा सत्यं निवेदनीयम्, स्वामिना च तत् अप्रियम् अपि श्रोतव्यम्।

**व्याकरणविमर्शः -**

- चारचक्षुषः - चरन्ति इति चराः, चरा एव चाराः इति कर्मधारयः, चारा एव चक्षूंषि येषां ते चारचक्षुषः इति बहुव्रीहिसमासः।
- मनोहारि - मनो हरति इति मनोहारि।
- वञ्चनीयाः - वञ्च-धातोः अनीयर्-प्रत्यये रूपमिदम्।
- दुर्लभम् - दुःखेन लभ्यते यत् तत् दुर्लभम्।

**सन्धिकार्यम्-**

- युक्तैर्नृप = युक्तैः + नृप (विसर्गसन्धिः)।
- अतोऽर्हसि = अतः + अर्हसि (विसर्गसन्धिः)।

**प्रयोगपरिवर्तनम् -**

- नृप!क्रियासु युक्ताः अनुजीविनः चारचक्षुषः प्रभून् न वञ्चयेयुः, अतः असाधु साधु वा (त्वया) क्षन्तुम् अर्ह्यते, हितेन मनोहारिणा च वचसा दुर्लभेन (भूयते)।

**अलङ्कारालोचना -**

- अत्र "हितं मनोहारि च दुर्लभं वचः"-इति वाक्यार्थस्य असाधु साधु वा मम वचनं श्रोतव्यम् इति

वाक्यार्थं प्रति उपपादकतया अभिधानात् काव्यलिङ्गालङ्कारः।

**कोषः** -

- प्रभुः - "अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः"इत्यमरः।



## पाठगतप्रश्नाः-४

१६. कीदृशैः अनुजीविभिः प्रभवः न वञ्चनीयाः।

१७. कीदृशं वचः दुर्लभम्।

१८. कीदृशाः प्रभवः न वञ्चनीयाः।

१९. चारचक्षुषः इति शब्दस्य कः अर्थः।

२०. स्वामिना कीदृशं वचः श्रोतव्यम्।

---

**स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः।**
**सदाऽनुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः।।५**

**अन्वयः** - यः अधिपं साधु न शास्ति, स किंसखा। यः हितात् न संशृणुते, स किंप्रभुः। हि सदा अनुकूलेषु नृपेषु अमात्येषु च सर्वसम्पदः रतिं कुर्वते।

**अन्वयार्थः** - यः सखा अमात्यादिः, अधिपं स्वामिनम्, साधु हितम्, न नहि, शास्ति उपदिशति, सः राज्ञः हितेषु विषयेषु अनुपदेष्टा अमात्यादिः, किंसखा कुत्सितः सखा दुर्मन्त्री इत्यर्थः। यः स्वामी, हितात् हितवादिनः अमात्यादेः समीपात्, न संशृणुते न शृणोति हितोपदेशं न गृह्णाति, सः अहितश्रोता, किंप्रभुः कुत्सितः प्रभुः अविवेकी इत्यर्थः। हि यतः, सदा सर्वदा, अनुकूलेषु अविरुद्धेषु, नृपेषु स्वामिषु, अमात्येषु मन्त्रिषु, च अपि, सर्वसम्पदः सकलसम्पत्तयः, रतिम् अनुरागम्, कुर्वते कुर्वन्ति।

**सरलार्थः** -यः सखा मन्त्री वा स्वामिने हितं न उपदिशति स कुसखा दुर्मन्त्री वा भवति। एवं यः प्रभुः राजा वा हितस्य उपदेष्टुः वाक्यं न शृणोति सोऽपि कुराजा एव। वस्तुतः राजानः अमात्याः च परस्परम् अनुरक्ताः स्युः। तर्हि तत्र सर्वा अपि राजसम्पत्तयः स्थिराः भवन्ति। अतः मया भवतः भाविमङ्गलाय यद् उच्यते तत् सावधानेन श्रोतव्यम्।

**तात्पर्यार्थः** - राज्यस्य समृद्ध्यर्थं नृपेषु सचिवेषु च ऐक्यमत्यम् आवश्यकं भवति इति प्रतिपादितम् अस्मिन् श्लोके। तथाहि यः सर्वदा प्रभुं हितम् एव वाक्यं वदति स एव योग्यः अमात्यः। य एवम् अमात्यादेः उपदेशं श्रुत्वा स्वीकरोति स योग्यः स्वामी। अत एव परस्परम् अनुरक्तयोः तयोः भवने राजलक्ष्मीः स्थिरा भवति। येन सा अन्यत्र गन्तुं एकम् अपि पदं न उत्थापयति।



**व्याकरणविमर्शः -**

- सर्वसम्पदः - सर्वाः चामूः सम्पदः चेति सर्वसम्पदः।
- शास्ति - शास्-धातोः लटि प्रथमपुरुषैकवचने रूपमिदम्।
- संशृणुते - सम्-श्रु-धातोः लटि प्रथमपुरुषैकवचने रूपमिदम्।

**सन्धिकार्यम्-**

- हितान्न = हितात् + न (हल्सन्धिः)।
- नृपेष्वमात्येषु = नृपेषु + अमात्येषु (यण्-सन्धिः)।

**प्रयोगपरिवर्तनम् -**

- येन अधिपः साधु न शिष्यते तेन किंसख्या (भूयते), येन हितात् न संशृणुते तेन किंप्रभुणा (भूयते), सदा अनुकूलेषु नृपेषु अमात्येषु च सर्वसम्पद्भिः रतिः क्रियते।

**अलङ्कारालोचना -**

- अत्र प्रभुभृत्ययोः ऐक्यमत्यं कारणम्, सर्वसम्पत्सिद्धिः च कार्यम्। तस्य कारणस्य कार्यसमर्थकतया अर्थान्तरन्यासः अलङ्कारः।

**कोषः -**

- सखा - "वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत्"इत्यमरः।



## पाठगतप्रश्नाः-५

२१. कः किंसखा।

२२. कः किंप्रभुः।

२३. अनुकूलेषु नृपेषु अमात्येषु किं भवति।

२४. कदा सर्वसम्पदः रतिं कुर्वते।

२५. शास्ति इत्यस्य कः अर्थः।

---

**निसर्गदुर्बोधमबोधविक्लवाः क्व भूपतीनां चरितं क्व जन्तवः।**
**तवानुभावोऽयमवेदि यन्मया निगूढतत्त्वं नयवर्त्म विद्विषाम्।।६**

**अन्वयः** - निसर्गदुर्बोधं भूपतीनां चरितं क्व। अबोधविक्लवाः जन्तवः क्व। मया विद्विषां निगूढतत्त्वं नयवर्त्म यत् अवेदि, (तत्) अयम् तव अनुभावः।

**अन्वयार्थः** - निसर्गदुर्बोधं स्वभावेन दुर्बोधं दुर्ज्ञेयम्, भूपतीनां राज्ञाम्, चरितं चरित्रम् कार्यकौशलम् इत्यर्थः, क्व कुत्र (वर्तते)। अबोधविक्लवाः अबोधेन अल्पबोधेन विक्लवाः विमूढाः



कर्तव्याकर्तव्यविवेकशून्याः, जन्तवः मादृशाः साधारणाः प्राणिनः, क्व कुत्र (वर्तन्ते)। बुद्धिमतां कार्यं बुद्धिमद्भिः एव अनुमेयम्, मया वनेचरेण, विद्विषां भवतः शत्रूणाम्, निगूढतत्त्वम् निगूढं सुगुप्तं तत्त्वं मन्त्रणादिकम् अतिगुप्तसारम्, नयवर्त्म नीतिमार्गः राजनीतिपथः, यत् यत्किञ्चित्, अवेदि ज्ञातम्, अयं (तु) इदं ज्ञानम्, तव भवतः युधिष्ठिरस्य, अनुभावः प्रभावः महिमा इत्यर्थः।

**सरलार्थः -** राज्ञां चरितम् अस्वाभाविकं भवति। तत् तु महामतिना जनेनापि सम्यक् ज्ञातुं न शक्यते। अतः मया मूढमतिना कथं ज्ञातुं शक्यते। तथापि अहं यत् किञ्चित् बहु वा ज्ञातवान्। तत् तु केवलं भवतः महिम्ना एव।

**तात्पर्यार्थः -** प्रस्तुते अस्मिन् श्लोके राज्ञां चरित्रस्य दुर्बोधता तथा चरस्य विनयशीलता अपि च निरभिमानिता निरूपिता। कारणं हि राज्ञां व्यवहारः स्वभावतः एव बुद्धिमताम् अपि अज्ञातप्रायः भवति। मादृशां प्राणिनां तत्र का कथा। तथापि तव शत्रूणाम् अतिगुप्तः रहस्यमयो नीतिमार्गः मया ज्ञातः। तत् तवैव सामर्थ्यात् न तु तत्र मम सामर्थ्यम्।

**व्याकरणविमर्शः -**

- अवेदि - विद्-धातोः कर्मणि लुङि प्रथमपुरुषैकवचने अवेदि इति रूपम्।
- निगूढतत्त्वम् - निश्चयेन गूढं निगूढम् इति गतिसमास,निगूढं तत्त्वं यस्य तद् निगूढतत्त्वम् इति बहुव्रीहिसमासः।
- नयवर्त्म – नयस्य वर्त्म नयवर्त्म इति तत्पुरुषसमासः।

**सन्धिकार्यम्-**

- यन्मया = यत् + मया (हल्सन्धिः)।
- तवानुभावोऽयम् = तव + अनुभावः (सवर्णदीर्घः) + अयम् (विसर्गसन्धिः)।

**प्रयोगपरिवर्तनम् -**

- निसर्गदुर्बोधेन भूपतीनां चरितेन क्व (भूयते)। अबोधविक्लवैः जन्तुभिः क्व (भूयते)। निगूढतत्त्वं विद्विषां नयवर्त्म अहं यत् अवेदिषम् अनेन तव अनुभावेन (भूयते)।

**अलङ्कारालोचना -**

- अत्र विषमालङ्कारः विद्यते। द्वयोः कथनयोः अत्यन्तं विषमता तत्र हेतुः।

**कोषः -**

- जन्तुः - "प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिणः"इत्यमरः।



## पाठगतप्रश्नाः-६

२६. भूपतीनां चरितं कीदृशं भवति।

२७. नयवर्त्म-शब्दस्य कः अर्थः।



२८. जन्तवः कीदृशाः भवन्ति।

२९. अनुभावः इत्यस्य कः अर्थः।

३०. वनेचरेण विद्विषां किम् अवेदि।



## पाठसारः

युधिष्ठिरः दुर्योधनेन द्यूतक्रीडायां छलेन पराजितः सन् सर्वस्वं हारयित्वा वनवासे निवसति स्म। तदा युधिष्ठिरस्य मनसि कथं दुर्योधनस्य राज्यशासनविषये विचारः उत्पन्नः। यतः राज्ये प्रजाः यदि प्रसन्नाः तर्हि राज्ञः राजलक्ष्मीः सुप्रतिष्ठिता भवति। ततः स दुर्योधनस्य राज्यशासनपद्धतिं ज्ञातुं वनेचरं प्रेषितवान्। स च ब्रह्मचारिवेषं धृत्वा तत्र गत्वा सर्वं ज्ञात्वा ततः आगत्य युधिष्ठिराय सर्वं कथयितुं युधिष्ठिरसमीपं द्वैतवनं समागतवान्। ततः युधिष्ठिरं प्रणम्य स दुर्योधनेन वशीकृतस्य राज्यस्य शासनविधिं यथायथं वक्तुम् उद्यतः। किन्तु कथं राज्ञे अप्रियं निवेदयामि इति विचिन्त्य तस्य मनः न व्यथितम्। यतो हि अप्रियसत्यकथनम् एव हितैषिणां चराणां कर्तव्यम्। तत् प्रियं वा भवतु अप्रियं वा। तस्मात् प्रभोः हितकारिणः भृत्याः कदापि मनसः तुष्टये मिथ्या न भाषन्ते। तेषां सत्यकथनम् एव परो धर्मः। एवं वनेचरः शत्रूणां विनाशसाधनाय उपायं चिन्तयतः राज्ञः युधिष्ठिरस्य आज्ञां प्राप्य स निर्जनप्रदेशे तदानीं यत् वक्तव्यं तत् सुमधुरया भाषया वक्तुम् आरब्धवान् यत् - हे राजन्! कस्मिन् अपि कर्मणि नियुक्तैः सेवकैः स्वस्वामिनां प्रतारणा न करणीया। यतः स्वामिनः चारनयनाः भवन्ति। अर्थात् कश्चित् नयनवान् पुरुषः यत् नयनेन पश्यति तदेव प्रमाणम् इति वदति। एवं चारेण यत् कथ्यते तदेव तेषां प्रमाणं भवति। सर्वथा सुप्रियं वचनं दुर्लभमेव। तस्मात् प्रियम् अप्रियं वास्तु धैर्यम् अवलम्ब्य श्रोतव्यम्।किञ्च समीचीनम् असमीचीनं यद् वा वदामि तदर्थं क्षन्तव्यः। यतः एकम् एव वाक्यं हितकरं मधुरं च उभयं न भवति। किञ्च, यः सखा मन्त्री वा स्वामिने हितं न उपदिशति स कुसखा दुर्मन्त्री वा भवति। एवं यः प्रभुः राजा वा हितस्य उपदेष्टुः वाक्यं न शृणोति सोऽपि कुराजा एव। वस्तुतः राजानः अमात्याः च परस्परम् अनुरक्ताः स्युः। तर्हि तत्र सर्वा अपि राजसम्पत्तयः स्थिराः भवन्ति। अतः मया भवतः भाविमङ्गलाय यद् उच्यते तत् सावधानेन श्रोतव्यम्। राज्ञां चरितं सर्वदा अस्वाभाविकं भवति। तत् तु महामतिना जनेनापि सम्यक् ज्ञातुं न शक्यते। अतः मया मूढमतिना कथं ज्ञातुं शक्यते। तथापि अहं यत् किञ्चित् बहु वा ज्ञातवान्। तत् तु केवलं भवतः महिम्ना एव।



## पाठान्तप्रश्नाः

१. वनेचरः केन कस्मिन् कर्मणि नियुक्तः।



२. वनेचरः केन उपायेन तत् कर्म सम्पादितवान्।

३. राजानः कैः किमर्थं न वञ्चनीयाः।

४. कः किंसखा। कश्च किंप्रभुः।

५. वनेचरस्य वचनं कीदृशम् आसीत्। कीदृशं च वचनं दुर्लभम्।

६. "क्व भूपतीनां चरितं क्व जन्तवः" - अत्र प्रयुक्तं क्वशब्दद्वयं किं सूचयति।

७. समानार्थकानि धातुरूपाणि मेलयत।

| **क-स्तम्भः** | **ख-स्तम्भः** |
|---|---|
| १. अवेदि | क. कुर्वन्ति। |
| २. इच्छति | ख. व्यथितम्। |
| ३. समाययौ | ग शक्नोति। |
| ४. अर्हति | घ अज्ञायि। |
| ५. कुर्वते | ङ. वाञ्छति। |
| ६.आददे | छ. स्वीकृतवान्। |
| ७. विव्यथे | ज. समागतवान्। |

उत्तराणि - १-घ, २-ङ, ३-ज, ४-ग, ५-क, ६-छ, ७-ख।



## किमधिगतम्

१) अमात्याः कथं भवेयुः इति अस्मात् पाठात् ज्ञायते।

२) प्रभुः कीदृशः भवेत् इत्यपि अस्मात् पाठात् ज्ञायते।

३) हितैषिणः मृषा प्रियं प्रवक्तुं न इच्छन्ति।

४) हितं मनोहारि च वचः दुर्लभं भवति।

५) चराः कथं विनयिनः अनुगताः च भवन्ति इति बुध्यते।

६) नूतनशब्दानां तथा विविधालङ्काराणाम् अपि ज्ञानं प्राप्तम्।



## पाठगतप्रश्नानामुत्तराणि

**उत्तराणि-१**

१. द्वैतवने।

२. युधिष्ठिरम्।

३. प्रजासु वृत्तिं वेदितुम्।

४. किरातः।

५. वनेचरस्य।



**उत्तराणि-२**

६. हितैषिणः।

७. वनेचरस्य।

८. मृषा प्रियम् च।

९. युधिष्ठिरः।

१०. कल्याणकामिनः।

**उत्तराणि-३**

११. वनेचरः।

१२. एकान्ते।

१३. अनुज्ञाम्।

१४. द्विषां विघाताय।

१५. सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थाम्।

**उत्तराणि-४**

१६. क्रियासु युक्तैः।

१७. हितं मनोहारि च।

१८. चारचक्षुषः।

१९. चारनयनाः।

२०. साधु असाधु वा।

**उत्तराणि-५**

२१. यः अधिपं साधु न शास्ति।

२२. यः हितात् न संशृणुते।

२३. सर्वसम्पदः रतिं कुर्वते।

२४. अनुकूलेषु नृपेषु अमात्येषु च।

२५. उपदिशति।

**उत्तराणि-६**

२६. निसर्गदुर्बोधम्।

२७. नीतिमार्गः।

२८. अबोधविक्लवाः।

२९. महिमा।

३०. निगूढतत्त्वम्।

॥ इति नवदशः पाठः ॥



# २०

# कपटस्य दुर्योधनस्य धर्माचरणम्

## प्रस्तावना

भवन्तः जानन्ति एव यत् कपटः दुर्योधनः द्यूतक्रीडायां कपटेन युधिष्ठिरं पराजितवान् इति। किन्तु स दुर्योधनः एतज्जानाति स्म यत् वनवासान्ते युधिष्ठिरः आत्मशक्त्या स्वराज्यं पुनः ग्रहीष्यति इति। अतः दयादाक्षिण्यादिगुणैः स्वकीर्तिं विस्तारयन् युधिष्ठिरादपि उत्कृष्टो भवितुं यथाशक्ति प्रयत्नं व्यदधात्। एवं दुर्योधनः स्वस्य दुष्टस्वभावं गोपायितुं किं किम् अकार्षीत् इत्यादिकं सर्वं भवन्तः पाठेऽस्मिन् पठिष्यन्ति। सेवकबान्धवादिषु च तस्य व्यवहारः कीदृश आसीत् येन लुब्धाः सन्तः ते विपक्षाः नाभूवन्। अपि च सः दुष्टः पुरुषार्थचतुष्टयं केन प्रकारेण असेवत येन ते चत्वारः पुरुषार्थाः परस्परम् अविरोधाः आसन्। एवं सकलप्रश्नानां समाधानं भवन्तः प्राप्स्यन्ति। तेन सह राजनीतेः चतुर्विधानां साम-दान-दण्ड-भेदानाम् उपायानां विनियोगे दुर्योधनः कथम् आसीत् इत्यपि ज्ञास्यते भवद्भिः। एवं विविधैः प्रकारैः सः खलः युधिष्ठिरम् अभिभवितुम् ऐच्छत्। किन्तु युधिष्ठिरसदृशेन सज्जनेन सह तस्य दुष्टचरितस्य दुर्योधनस्य विरोधः कल्याणकारकं न वा इति पाठेऽस्मिन् भवतां स्पष्टं भविष्यति।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- कपटः दुर्योधनः कथं नीतिमार्गम् अनुसरति इति ज्ञास्यति।
- दुर्योधनः प्रजानां प्रीत्यर्थं किं किं करोति इति ज्ञास्यति।
- तस्य दुर्योधनस्य राजनीतिज्ञानं कथम् आसीत् इत्यपि ज्ञास्यति।
- पाठम् अमुं पठित्वा व्याकरणज्ञानसम्पन्नो भविष्यति।
- अपि च पद्यकाव्यस्य निर्माणं कर्तुं शक्ष्यति।

## २०.१) मूलपाठः

**विशङ्कमानो भवतः पराभवं नृपासनस्थोऽपि वनाधिवासिनः ।**
**दुरोदरच्छद्मजितां समीहते नयेन जेतुं जगतीं सुयोधनः ।। १.७ ।।**

**तथापि जिह्मः स भवज्जिगीषया तनोति शुभ्रं गुणसम्पदा यशः ।**
**समुन्नयन्भूतिमनार्यसंगमाद्वरं विरोधोऽपि समं महात्मभिः ।। १.८ ।।**



कृतारिषड्वर्गजयेन मानवीमगम्यरूपां पदवीं प्रपित्सुना ।
विभज्य नक्तंदिवमस्ततन्द्रिणा वितन्यते तेन नयेन पौरुषम् ।। १.९ ।।

सखीनिव प्रीतियुजोऽनुजीविनः समानमानान्सुहृदश्च बन्धुभिः ।
स सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बन्धुताम् ।। १.१० ।।

असक्तमाराधयतो यथायथं विभज्य भक्त्या समपक्षपातया ।
गुणानुरागादिव सख्यमीयिवान्न बाधतेऽस्य त्रिगणः परस्परम् ।। १.११ ।।

निरत्ययं साम न दानवर्जितं न भूरि दानं विरहय्य सत्क्रियाम् ।
प्रवर्तते तस्य विशेषशालिनी गुणानुरोधेन विना न सत्क्रिया ।। १.१२ ।।

वसूनि वाञ्छन्न वशी न मन्युना स्वधर्म इत्येव निवृत्तकारणः ।
गुरूपदिष्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्मविप्लवम्।। १.१३ ।।

## २०.२) साम्प्रतम् मूलपाठम् अवगच्छाम

**विशङ्कमानो भवतः पराभवं नृपासनस्थोऽपि वनाधिवासिनः।**
**दुरोदरच्छद्मजितां समीहते नयेन जेतुं जगतीं सुयोधनः।।७**

**अन्वयः** - नृपासनस्थः अपि वनाधिवासिनः भवतः पराभवं विशङ्कमानः सुयोधनः दुरोदरच्छद्मजितां जगतीं नयेन जेतुं समीहते।

**अन्वयार्थः** - नृपासनस्थः नृपस्य राज्ञः आसने तिष्ठति इति नृपासनास्थः राजसिंहासनारूढः, (सन्) अपि, वनाधिवासिनः वने विहरतः, भवतः त्वत्तः, पराभवं पराजयम्, विशङ्कमानः मन्यमानः, सुयोधनः अक्लेशयोद्धा (धृतराष्ट्रस्य ज्येष्ठपुत्रः कुरुराजः), दुरोदरच्छद्मजितां दुष्टम् उदरं यस्य तत् दूरोदरम्, तस्य छद्मना व्याजेन जितां वशीकृताम्, जगतीं पृथिवीम्, नयेन न्यायेन, जेतुं वशीकर्तुम्, समीहते चेष्टते।

**सरलार्थः** - सम्राट् अपि स राजा दुर्योधनः द्यूतकपटेन राज्यं विजितवान्। किञ्च कपटेन लब्धं राज्यं राजनीत्या सम्यक् वशीकर्तुं चेष्टते। भवान् अधुना वनम् अधिवसति। वनवासस्य अवसाने भवान् पुनः विजित्य स्वराज्यं ग्रहीष्यति इति सदैव स शङ्कते। अतः तथा नीतिबलेन वशीकर्तुं यतते। येन भवान् स्वराज्यस्य पुनरुद्धारं कर्तुं न शक्ष्यति।

**तात्पर्यार्थः** - राजसिंहासने आरूढः सन् दुर्योधनः युधिष्ठिरस्य पराजयं सततं चिन्तयति। स विक्रमेण युधिष्ठिरं जेतुम् असमर्थः इति स्वयं जानाति। तथापि न्यायेन राष्ट्रं पालयन् वशीकर्तुं चेष्टते इत्यादि सर्वं प्रस्तुते अस्मिन् श्लोके प्रतिपादितम्।



**व्याकरणविमर्शः -**

- समीहते - सम्-इह-धातोः लटि रूपमिदम्।
- जेतुम् - जि-धातोः तुमुन्-प्रत्यये रूपमिदम्।
- नृपासनस्थः - नृपस्य आसनं नृपासनम्, नृपासने तिष्ठति इति नृपासनस्थः।
- वनाधिवासिनः - वनम् अधिवसति इति वनाधिवासी, तस्मात् वनाधिवासिनः।
- दुरोदरच्छद्मजिताम् - दुरोदरस्य (द्युतस्य) छद्म (कपटं) दुरोदरच्छद्म, तेन दुरोदरच्छद्मना जिता दुरोदरच्छद्मजिता, तां दुरोदरच्छद्मजिताम्।

**सन्धिकार्यम्-**

- नृपासनस्थनोऽपि = नृपासनस्थः + अपि।

**प्रयोगपरिवर्तनम् -**

- सुयोधनेन नृपासनस्थेनापि वनाधिवासिनः भवतः पराभवं विशङ्कमानेन दुरोदरच्छद्मजिता जगती नयेन जेतुं समीह्यते।

**कोषः -**

- जगती - "त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्"इत्यमरः।



## पाठगतप्रश्नाः-१

१. कः जगतीं जेतुं समीहते।

२. नृपासनस्थः दुर्योधनः किं विशङ्कमानः अस्ति।

३. सुयोधनः केन उपायेन जगतीं जेतुं समीहते।

४. दुर्योधनः कस्मात् पराजयं विशङ्कमानः अस्ति।

५. दुरोदरच्छद्मजिताम् इति किं विशिनष्टि।

---

**तथापि जिह्मः स भवज्जिगीषया तनोति शुभ्रं गुणसम्पदा यशः।**
**समुन्नयन् भूतिमनार्यसङ्गमाद्वरं विरोधोऽपि समं महात्मभिः।।८**

**अन्वयः** - तथापि जिह्मः भवज्जिगीषया गुणसम्पदा शुभ्रं यशः तनोति। भूतिं समुन्नयन् महात्मभिः समं विरोधः अनार्यसङ्गमात् अपि वरम्।

**अन्वयार्थः** - तथापि भवतः पराभवम् आशङ्कितवान् अपि, स जिह्मः प्रतारकः वञ्चकः, भवज्जिगीषया जेतुम् इच्छा जिगीषा, भवतः जयेच्छया, भवन्तं दयाशौर्यादिभिः गुणैः जेतुम् इच्छया,



गुणसम्पदा दानादिगुणगरिम्णा, शुभ्रं निर्मलम्, यशः कीर्तिम्, तनोति विस्तारयति। दानादिगुणैः तव कीर्तिसम्पदम् आत्मसात्कर्तुं तवापेक्षया अपि आत्मनः गुणवत्तां प्रकटयति। भूतिं सम्पदम्, समुन्नयन् उत्कर्षम् आपादयन्, महात्मभिः महान् आत्मा येषां तैः प्रकृष्टगुणशालिभिः, समं साकम्, विरोधः विरुद्धाचरणम्, अनार्यसङ्गमात् न आर्याः अनार्याः तेषां सङ्गमः तस्मात् नीचसंसर्गात् अपि वरम् मनाक् प्रियः।

**सरलार्थः -** भवतः दयादाक्षिण्यादिगुणैः सर्वाः प्रजाः भवन्तं प्रति अत्यन्तम् अनुरक्ताः। तत् दृष्ट्वा दुर्योधनः शङ्कते यत् वनवासात् निवृत्तः भवान् पुनः स्वराज्यं ग्रहीष्यति इति। तस्मात् प्रजाः यथा तदधीनाः स्युः तदर्थं प्रयतते। तथाहि स आत्मनः गुणान् अतिशयेन प्रकटयति। तथा च स्वस्य यशः कीर्तयति। यतो हि दुर्जनसंसर्गापेक्षया महद्भिः सह विरोधः अपि श्रेयस्करम्। येन ऐश्वर्यम् उत्कर्षं गच्छति।

**तात्पर्यार्थः -** प्रस्तुते अस्मिन् श्लोके दुर्योधनः दानादिसद्गुणैः राज्यं पालयन् स्वकीर्तिं विस्तारयति इत्यादि प्रतिपाद्यते। तत्र कारणं प्रजाः यथा भवन्तम् उच्चदृष्ट्या पश्यति तद्वत् तमपि पश्येत्। किन्तु साम्प्रतम् अपि दुःशासनादीनां दुर्जनानां संसर्गं न त्यजति। यतः असौ स्वभावतः एव खलः। तस्मात् भवादृशैः महद्भिः सह विरोधम् अपि स श्रेष्ठम् एव मन्यते।

**व्याकरणविमर्शः -**

- भवज्जिगीषया - जेतुम् इच्छा जिगीषा, भवतो जिगीषा भवज्जिगीषा. तया भवज्जिगीषया।
- गुणसम्पदा - गुणानां सम्पद् गुणसम्पत् तया गुणसम्पदा।
- अनार्यसङ्गमात् - न आर्यः अनार्यः, अनार्यस्य सङ्गमः अनार्यसङ्गमः, तस्मात् अनार्यसङ्गमात्।
- महात्मभिः - महान् आत्मा यस्य असौ महात्मा, तैः महात्मभिः।
- तनोति - तन्-धातोः लटि रूपम्। ससुन्नयन् - सम्-उत्-नी-धातोः शतरि रूपम्।

**सन्धिकार्यम्-**

- अनार्यसङ्गमाद्वरम् = अनार्यसङ्गमात् + वरम्।
- विरोधोऽपि = विरोधः + अपि।

**प्रयोगपरिवर्तनम् -**

तथापि जिह्मेन तेन भवज्जिगीषया गुणसम्पदा शुभ्रं यशः तन्यते, भूतिं समुन्नयता महात्मभिः समं विरोधेन अनार्यसङ्गमाद् वरेण (भूयते)।

**कोषः -**

- भूतिः - "विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा"इत्यमरः।





## पाठगतप्रश्नाः-२

६. कः गुणसम्पदा यशः तनोति।

७. महात्मभिः समं विरोधः अनार्यसङ्गमात् अपि वरम् इति कः मन्यते।

८. दुर्योधनः किमर्थं यशः तनोति।

९. दुर्योधनः किं कृत्वा महात्मभिः समं विरोधः अनार्यसङ्गमात् अपि वरम् इति मन्यते।

१०. जिह्मः इति शब्दस्य कः अर्थः।

---

**कृताऽरिषड्वर्गजयेन मानवीमगम्यरूपां पदवीं प्रपित्सुना।**
**विभज्य नक्तन्दिवमस्ततन्द्रिणा वितन्यते तेन नयेन पौरुषम्।।९**

**अन्वयः** - कृतारिषड्वर्गजयेन अगम्यरूपां मानवीं पदवीं प्रपित्सुना अस्ततन्द्रिणा तेन नक्तन्दिवं विभज्य नयेन पौरुषं वितन्यते।

**अन्वयार्थः** - कृतारिषड्वर्गजयेन षट्संख्यकानां वर्गः समूहः षड्वर्गः, अरीणां शत्रूणां कामक्रोधादीनां षड्वर्गः अरिषड्वर्गः, अरिषड्वर्गस्य जयः अरिषड्वर्गजयः, कृतः अरिषड्वर्गजयः येन स कृतारिषड्वर्गजयः, तेन कामादिषड्-रिपून् विजित्य स्थितेन सुविनीतेन इत्यर्थः। विनय एव प्रजापालनस्य उपायः इति भावः। अगम्यरूपाम् अगम्यं पुरुषमात्रेण दुष्प्राप्यं रूपं स्वरूपं यस्याः ताम्, मानवीं मनुना उपदिष्टेन सदाचारेण युक्ताम्, पदवीं प्रजापालनस्य पद्धतिम्, प्रपित्सुना प्रपत्तुं लब्धुम् इच्छुना, तेन दुर्योधनेन, अस्ततन्द्रिणा अस्ता दूरे क्षिप्ता परित्यक्ता तन्द्रिः आलस्यं येन तेन अनलसेन इत्यर्थः। पौरुषं पुरुषस्य कार्यं पुरुषकारः उद्योगः। नक्तन्दिवम् अहोरात्रम्, विभज्य भागं कृत्वा, वितन्यते विस्तार्यते।

**सरलार्थः** - कामक्रोधादीन् षट् रिपून् विवेकेन जित्वा मनुना उपदिष्टं प्रजाशासनं पालयति। किञ्च, तेन यशः लब्धुम् इच्छति। अस्मिन् समये इदं करणीयं, तस्मिन् समये तत् करणीयम् इति रीत्या दिनं विभज्य सुनियमेन सर्वं कार्यं करोति। एवम् आलस्यरहितः सन् प्रजासु स्वस्य पुरुषकारं प्रदर्शयति।

**तात्पर्यार्थः** - प्रस्तुते अस्मिन् श्लोके दुर्योधनः कथं पुरुषार्थं प्रदर्शयति इति वर्णयति किरातः। तथाहि दुर्योधनः षड् रिपून् विजित्य दिवसं पृथग्भागेषु विभक्तवान्। किञ्च, मनुना उपदिष्टं मार्गम् अवलम्ब्य यथासमयं कार्यं साधयति। एवं सदा एव नीतिमार्गम् अनुसृत्य एव पुरुषकारं प्रदर्शयति। अपि च अनेन वस्तुतः स स्वस्य दुष्टस्वभावं गोपायति।

**व्याकरणविमर्शः -**

- कृतारिषड्वर्गजयेन - षण्णां वर्गः षड्वर्गः। अरीणां षड्वर्गः अरिषड्वर्गः। कृतः अरिषड्वर्गस्य जयो येन सः कृतारिषड्वर्गजयः, तेन कृतारिषड्वर्गजयेन।
- अगम्यरूपाम् - अगम्यं रूपं यस्याः सा अगम्यरूपा, ताम् अगम्यरूपाम्।



- मानवीम् - मनोः इयं मानवी, ताम् मानवीम्।
- अस्ततन्द्रिणा - अस्ता तन्द्रिर्यस्य येन वा सः अस्ततन्द्रिः, तेन अस्ततन्द्रिणा।
- पौरुषम् - पुरुषस्येदं पौरुषम्।
- विभज्य - वि-भज्-धातोः क्त्वोः ल्यपि रूपम्।
- वितन्यते = वि-तनु-धातोः कर्मणि यकि लटि रूपम्।

**प्रयोगपरिवर्तनम् -**

कृतारिषड्वर्गजयः अगम्यरूपां मानवीं पदवीं प्रपित्सुः, अस्ततन्द्रिः स पौरुषं नक्तन्दिवं विभज्य नयेन वितनोति।

**अलङ्कारालोचना -**

- अत्र कृतारिषड्वर्गजयेन इति, मानवीं पदवीं प्रपित्सुना इति, अस्ततन्द्रिणा इति च विशेषणत्रयस्य परस्परं साकाङ्क्षतया साभिप्रायत्वात् परिकरालङ्कारः।

**कोषः -**

- पदवी - "अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः ।
  सरणिः पद्धतिः पद्या वर्त्तन्येकपदीति च"इत्यमरः।



## पाठगतप्रश्नाः-३

११. केन नयेन पौरुषं वितन्यते।

१२. तेन च किं कृत्वा पौरुषं वितन्यते।

१३. कृतारिषड्वर्गजयः कीदृशीं पदवीं प्रपित्सुः।

१४. अस्ततन्द्रिणा इत्यस्य कः अर्थः।

१५. पौरुषं नाम किम्।

---

**सखीनिव प्रीतियुजोऽनुजीविनः समानमानान्सुहृदश्च बन्धुभिः।**
**स सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बन्धुताम्।।१०**

**अन्वयः** - गतस्मयः स सन्ततम् अनुजीविनः प्रीतियुजः सखीन् इव सुहृदः च बन्धुभिः समानमानान् बन्धुतां कृताधिपत्याम् इव साधु दर्शयते।

**अन्वयार्थः** - गतस्मयः गतः अपगतः स्मयः अहङ्कारः यस्य सः अहङ्काररहितः, सः सुयोधनः, सन्ततं सर्वदा, अनुजीविनः भृत्यान्, प्रीतियुजः वत्सलान्, सखीन् इव मित्राणि इव, सुहृदः शोभनं हृदयं येषाम् ते बान्धवाः तान् च बन्धुभिः भ्रात्रादिभिः, समानमानान् समानः तुल्यः मानः सम्मानः येषां तान्।



आत्मीयान् सहोदरान् इव पश्यति इत्यर्थः। बन्धुताम् बन्धूनां समूहः बन्धुता ताम्, कृताधिपत्याम् कृतम् आधिपत्यं यया ताम्, इव साधु अकपटम् दर्शयते बोधयते। बन्धून् इव अधिपतीन् इव, साधु पश्यति इत्यर्थः।

**सरलार्थः** - स राजा दुर्योधनः अहङ्कारं परित्यज्य भृत्यान् तथा सम्पादितवान् येन जनाः भृत्यान् राज्ञः सखीन् इव मन्यन्ते। ते च भृत्याः राजानं सखायं मन्यन्ते। राजा दुर्योधनःअपि तैः सह तथा व्यवहरति। एवं बन्धून् तथा सम्पादितवान् येन जनाः राज्ञः बन्धून् तस्य भ्रातृन् इव मन्यन्ते। राजा अपि तैः सह भ्रातृवत् आचरति। स्वस्य भ्रातृन् एवं सम्पादितवान् येन जनाः तान् प्रभून् मन्यन्ते। एवं स स्वस्य साधुतां प्रकटयति।

**तात्पर्यार्थः** - सेवकबान्धवान् प्रति दुर्योधनस्य कीदृशः व्यवहारः इति वर्ण्यते प्रस्तुते अस्मिन् श्लोके। स दुर्योधनः अभिमानं विस्मृत्य सर्वदा भृत्यैः सह मित्रम् इव आचरति। तेन जनान् भृत्यान् प्रति तस्य प्रीतिं प्रदर्शयति। बान्धवैश्च सह सदा भ्रातृवत् आचरति। अतः बन्धुजनेषु भ्रात्रादिषु इव सत्कारं करोति इति बोधयति। किञ्च, भ्रात्रादिभिः सह एवम् आचरति येन जनाः एवं चिन्तयेत् यत् भ्रात्रादिषु सः सर्वस्वम् अर्पितवान् इति ।

**व्याकरणविमर्शः -**

- गतस्मयः - गतः स्मयो यस्य स गतस्मयः।
- प्रीतियुजः - प्रीत्या युञ्जन्ति ये ते प्रीतियुजः,तान् प्रीतियुजः।
- अनुजीविनः - अनु पश्चात् ( धावनेन) जीवनं येषां तेऽनुजीविनः, तान् अनुजीविनः।
- समानमानान् - समानः मानो येषां ते समानमानाः, तान् समानमानान्।
- कृताधिपत्याम् - अधिपतेः कर्म आधिपत्यम्, कृतम् आधिपत्यम् यया तां कृताधिपत्याम्।

**सन्धिकार्यम्-**

- प्रीतियुजोऽनुजीविनः = प्रीतियुजः + अनुजीविनः।
- सुहृदश्च = सुहृदः + च।

**प्रयोगपरिवर्तनम् -**

गतस्मयेन तेन सन्ततम् अनुजीविनः प्रीतियुजः सखायः इव दर्श्यन्ते। सुहृदः बन्धुभिः समानमाना इव दर्श्यन्ते। बन्धुता कृताधिपत्या इव साधु दर्श्यते।

**अलङ्कारालोचना -**

- अत्र छेकानुप्रासालङ्कारः। सकार-नकारयोः सकृत् आवृत्तिः तत्र हेतुः।

**कोषः -**

- सखा - “वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत्"इत्यमरः।





## पाठगतप्रश्नाः-४

१६. अत्र कः गतस्मयः।

१७. सः अनुजीविनः कान् इव पश्यति।

१८. सः सुहृदश्च किंरूपेण पश्यति।

१९. सः बन्धुतां कथं दर्शयते।

२०. समानमानान् इत्यस्य कः अर्थः।

---

**असक्तमाराधयतो यथायथं विभज्य भक्त्या समपक्षपातया।**
**गुणानुरागादिव सख्यमीयिवान्न बाधतेऽस्य त्रिगणः परस्परम्।। ११**

**अन्वयः** - यथायथं विभज्य समपक्षपातया भक्त्या असक्तम् आराधयतः अस्य गुणानुरागात् सख्यम् ईयिवान् इव त्रिगणः परस्परं न बाधते।

**अन्वयार्थः** - यथायथं यथास्वं यथोचितम्, विभज्य विभागं कृत्वा, धर्मार्धकामानां मध्ये अस्मिन् काले धर्मः सेव्यः, अस्मिन् काले अर्थः सेव्यः, अस्मिन् काले कामः सेव्यः इति एवं विभागं विधाय, समपक्षपातया समः तुल्यः पक्षपातः अनुरागः यस्याम् तया, भक्त्या सेवया, असक्तम् अनासक्तम्, आराधयतः सेवमानस्य अस्य दुर्योधनस्य, त्रिगणः त्रयाणां धर्मार्थकामानां गणः त्रिवर्गः इत्यर्थः, गुणानुरागात् गुणेषु अनुरागात् आसक्तिविशेषात्, सख्यम् मित्रता, ईयिवान् प्राप्तवान्, इव परस्परम् अन्योऽन्यम्, न बाधते बाधं न करोति।

**सरलार्थः** - सः धर्मः अर्थः कामश्च समम् एव सेवनीयाः इति वचनं न अवलम्बते। स राजा धर्मार्थकामानां सम्यक् विभागं कृत्वा यथाकालं तान् सेवते। अर्थात् यस्मिन् समये यः पुरुषार्थः सेव्यः तदा तम् एव सेवते न अन्यत्। अतः ते सर्वे पुरुषार्थाः तस्मिन् दुर्योधने बाधं विना एव तिष्ठन्ति। अतः तस्य धर्मार्थकामाः सदा एव अतिशयेन वृद्धिं प्राप्नुवन्ति।

**तात्पर्यार्थः** - प्रस्तुते अस्मिन् श्लोके अनासक्तः दुर्योधनः कथं समानुरागेण पुरुषार्थाणां सेवनं करोति तदेव वर्णितम्।धर्मार्थकामाः एते पुरुषार्थाः परस्परं विरोधिनः सन्ति। तथापि राजा दुर्योधनः तेषां सेवनस्य समयं विभज्य तान् अनासक्तः सन् सेवते। ते सर्वे पुरुषार्थाः तस्मिन् दुर्योधने बाधं विना एव तिष्ठन्ति। अर्थात् धर्माचरणकाले अर्थकामौ धर्मं न बाधेते। अर्थोपार्जनकाले धर्मकामौ अर्थं न बाधेते। एवं कामसेवनकाले धर्मार्थौ अपि कामं न बाधेते।

**व्याकरणविमर्शः -**

- समपक्षपातया - समः पक्षपातो यस्यां सा समपक्षपाता, तया समपक्षपातया।
- गुणानुरागात् - गुणेषु गुणानां वा अनुरागो गुणानुरागः, तस्माद् गुणानुरागात्।



- त्रिगणः त्रयाणां गणः त्रिगणः।
- आराधयतः - आ-राध्-धातोः णिचि शतरि रूपम्।
- भक्त्या - भज्-धातोः क्तिन्-प्रत्यये तृतीयैकवचने रूपम्।

१) **सन्धिकार्यम्-**

- गुणानुरागादिव = गुणानुरागात् + इव।
- बाधतेऽस्य = बाधते + अस्य।

**प्रयोगपरिवर्तनम् -**

यथायथं विभज्य समपक्षपातया भक्त्या असक्तम् आराधयतः अस्य गुणानुरागात् सख्यम् ईयुषा त्रिगणेन परस्परं न बाध्यते।

**कोषः -**

- असक्तम् - "अनासक्तमसक्तं च पृथग्वर्ति पृथग् स्थितम्"इत्यमरः।
- यथायथम् - "यथार्थं तु यथायथम्"इत्यमरः।



## पाठगतप्रश्नाः-५

२१. असक्तम् आराधयतः कस्य त्रिगणः परस्परं न बाधते।
२२. दुर्योधनः कीदृश्या भक्त्या असक्तम् आराधयति।
२३. दुर्योधनस्य किं परस्परं न बाधते।
२४. को नाम त्रिगणः।
२५. तस्य त्रिगणः गुणानुरागात् किम् ईयिवान् इव।

---

**निरत्ययं साम न दानवर्जितं न भूरि दानं विरहय्य सत्क्रियाम्।**
**प्रवर्तते तस्य विशेषशालिनी गुणानुरोधेन विना न सत्क्रिया।।१२**

**अन्वयः** - तस्य निरत्ययं दानवर्जितं साम, न (प्रवर्तते)। सत्क्रियां विरहय्य भूरि दानं न (प्रवर्तते)। विशेषशालिनी सत्क्रिया गुणारोधेन विना न प्रवर्तते।

**अन्वयार्थः** - तस्य दुर्योधनस्य, निरत्ययं निबार्धम् अमायिकम्, साम सान्त्वनम् शान्तिप्रयोगः प्रियवचनम्, दानवर्जितं धनदानरहितम्, न नहि, प्रवर्तते प्रवृत्ता भवति। सत्क्रियां सत्कारं सम्मानम्, विरहय्य विहाय अनादृत्य, भूरि प्रचुरं बहुलम्, दानं धनदानम् अर्थवितरणम्, न नहि, प्रवर्तते। (तस्य) विशेषशालिनी विशेषेणा प्रशंसायोग्या शोभनीया, सत्क्रिया सत्कारः आदरयुक्ता क्रिया, गुणानुरोधेन गुणानां विद्याविनयादीनाम् अनुरागेण पक्षपातेन दर्शनेन, विना न प्रवर्तते।



**सरलार्थः** - तस्य राज्ञः दुर्योधनस्य सामनीतिः अर्थवितरणं विना न प्रवृत्ता भवति। तस्य बहुलम् अर्थवितरणम् अपि सत्कारं विना प्रवृत्तं न भवति। एवमेव तस्य दुर्योधनस्य प्रशंसनीयः सत्कारः अनुरागेण विना प्रवृत्तः न भवति। अर्थात् तस्य सामनीतिः धनयुक्ता अस्ति। यस्य उपरि सः प्रसन्नः भवति तस्मै धनं ददाति। धनं च ससम्मानं प्रयच्छति न तु निरादरपूर्वकम्। अर्थात् गुणिनः पुरुषस्य एव सः सत्कारं करोति न तु निर्गुणस्य।

**तात्पर्यार्थः** - अत्र अस्मिन् श्लोके राजनीतेः चतुर्विधानां साम-दान-दण्ड-भेदानाम् उपायानां विनियोगे दुर्योधनः कुशलः आसीत् इति ज्ञाप्यते। स दुर्योधनः यस्य कस्य उपरि प्रसन्नो भूत्वा सस्नेहम् आलापं करोति। तत्र आलापस्य माधुर्यम् एव फलं नास्ति। तस्मै धनम् अपि ददाति। आदरं विना दानं विफलम्, अतः यथायथं सत्कृत्य धनं ददाति। न हि यस्य कस्यापि सत्कारं करोति, य एव सत्कारयोग्यः गुणवान् जनः तस्यैव करोति। अनेन तस्य नीतिकुशलता परिचिता भवति।

**व्याकरणविमर्शः -**

- निरत्ययम् - निर्गतः अत्ययो यस्मात् तद् निरत्ययम्।
- दानवर्जितम् - दानेन वर्जितं दानवर्जितम्।
- सत्क्रियाम् - सती चासौ क्रिया सत्क्रिया, तां सत्क्रियाम्।
- गुणानुरोधेन - गुणानाम् अनुरोधः गुणानुरोधः तेन गुणानुरोधेन।
- प्रवर्त्तते - प्र-वृतु-धातोःलटि रूपम्।

**प्रयोगपरिवर्तनम् -**

तस्य निरत्ययेन साम्ना दानवर्जितेन न (प्रवृत्यते)। सत्क्रियां विरहय्य भूरिणा दानेन न (प्रवृत्यते)। गुणानुरोधेन विना विशेषशालिन्या सत्क्रियया न प्रवृत्यते।

**अलङ्कारालोचना -**

- अत्र पूर्वं पूर्वं वाक्यं प्रति परं परं वाक्यं विशेषणतया स्थापितम् इति कारणात् एकावलीनामालङ्कारः।

**कोषः -**

- अत्ययः - "अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽप्यथापदि"इत्यमरः।



## पाठगतप्रश्नाः-६

२६. दुर्योधनस्य निरत्ययं साम कथं न प्रवर्तते।

२७. तस्य भूरि दानं कथं न प्रवर्तते।

२८. तस्य सत्क्रिया कीदृशी।

२९. सत्क्रिया च कथं न प्रवर्तते।



३०. अत्र साम इत्यस्य कः अर्थः।

**वसूनि वाञ्छन्न वशी न मन्युना स्वधर्म इत्येव निवृत्तकारणः।**
**गुरूपदिष्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्मविप्लवम्।।१३**

**अन्वयः** - वशी सः (दुर्योधनः), वसूनि वाञ्छन् न, मन्युना न, निवृत्तकारणः (सन्) स्वधर्मः एव (एषः) इति गुरूपदिष्टेन दण्डेन रिपौ वा सुते अपि धर्मविप्लवं निहन्ति।

**अन्वयार्थः** - वशी जितेन्द्रियः, सः दुर्योधनः, वसूनि धनानि, वाञ्छन् प्राप्तुम् इच्छन्, न नहि, मन्युना कोपेन क्रोधेन, न नहि, (अपि तु) निवृत्तकारणः (सन्) कारणरहितः सन्, स्वधर्मः एव एष राजधर्मः, अयं मम धर्मः, इति एवं रूपेण, गुरूपदिष्टेन गुरुणा मन्वादिना उपदिष्टेन विहितेन गुरूपदिष्टेन गुरुशिक्षितेन, दण्डेन दण्डविधिना, रिपौ शत्रौ शत्रुविषये, वा अथवा, सुते पुत्रे स्वपुत्रविषये, अपि धर्मविप्लवं धर्मविरुद्धं नीतेः उल्लङ्घनम्, निहन्ति निवारयति। धर्मस्य विप्लवं दण्डेन निवारयति इत्यर्थः।

**सरलार्थः** - जितेन्द्रियः सः दुर्योधनः न हि धनानि प्राप्तुम् इच्छन्, न च कोध्रेन कमपि दण्डयति। अपि तु लोभादिकारणरहितः सन् "राज्ञः मम धर्म एव यत् दण्ड्यानां दण्डनम् अदण्ड्यानां क्षमाकरणं च"इति मत्वा धर्मं चरति। अतः गुरूपदिष्टेन दण्डेन शत्रौ तथा स्वकीयपुत्रे स्थितं धर्मस्य व्यतिक्रमम् अधर्मं निवारयति।

**तात्पर्यार्थः** - अस्मिन् श्लोके राज्ञो दुर्योधनस्य दण्डनीतिः प्रशंसिता। स दुर्योधनः दण्डनीतेः प्रयोगे कुशलः। स्वयं जितेन्द्रियः, अतः शत्रुं सुतम् उभयं समं पश्यति। एवं सः दण्डनीतेः समुचितप्रयोगेण धर्मस्य विप्लवं निवारयन् धर्मं रक्षति। प्रजाजनं प्रति तस्य दृष्टिः पक्षपातरहिता विद्यते। धनलोभेन अथवा क्रोधेन स कदापि कमपि न दण्डयति। अपि तु धर्मो रक्षितव्यः मया इति भावनया सः अपराधिनः दण्डयति। न तु कदापि निर्दोषान् सज्जनान्।

**व्याकरणविमर्शः -**

- निवृत्तकारणः - निवृत्तानि कारणानि यस्मात् स निवृत्तकारणः।
- गुरूपदिष्टेन - गुरुणा उपदिष्टः तेन गुरूपदिष्टेन।
- धर्मविप्लवम् - धर्मस्य विप्लवः धर्मविप्लवः तम् धर्मविप्लवम्।
- निहन्ति - नि-हन्-धातोः प्रथमपुरुषैकवचने रूपम्।
- वशी - वश्-धातोः इन्-प्रत्यये प्रथमैकवचने रूपम्।

**सन्धिकार्यम्-**

- वाञ्छन्न = वाञ्छन् + न।
- सुतेऽपि = सुते + अपि।

**प्रयोगपरिवर्तनम् -**



वशिना तेन , वसूनि वाञ्छता न, मन्युना न, स्वधर्म एव इति निवृत्तकारणेन (दुर्योधनेन) गुरूपदिष्टेन दण्डेन रिपौ सुते अपि धर्मविप्लवो निहन्यते।

**अलङ्कारालोचना -**

- अत्र वृत्यनुप्रासालङ्कारः, व्यञ्जनस्य तकारस्य असकृत् आवृत्तिः तत्र हेतुः।

**कोषः -**

- कारणम् - "हेतुर्ना कारणं बीजं निदानं त्वादिकारणम्"इत्यमरः।



## पाठगतप्रश्नाः-७

३१. वशी दुर्योधनः किं निहन्ति।

३२. स च किं कुर्वन् निहन्ति।

३३. सः किं सहायेन धर्मविप्लवं निहन्ति

३४. सः केषु धर्मविप्लवं निहन्ति।

३५. अत्र मन्युशब्दस्य कः अर्थः।



## पाठसारः

सम्राट् अपि स राजा दुर्योधनः द्यूतकपटेन राज्यं विजितवान्। किञ्च कपटेन लब्धं राज्यं राजनीत्या सम्यक् वशीकर्तुं चेष्टते। भवान् अधुना वनम् अधिवसति। वनवासावसाने भवान् पुनः विजित्य स्वराज्यं ग्रहीष्यति इति सदैव स शङ्कते। अतः तथा नीतिबलेन वशीकर्तुं यतते। येन भवान् स्वराज्यस्य पुनरुद्धारं कर्तुं न शक्ष्यति। भवतः दयादाक्षिण्यादिगुणैः सर्वाः प्रजाः भवन्तं प्रति अत्यन्तम् अनुरक्ताः। तत् दृष्ट्वा दुर्योधनः शङ्कते यत् वनवासात् निवृत्तः भवान् पुनः स्वराज्यं ग्रहीष्यति इति। तस्मात् प्रजाः यथा तदधीनाः स्युः तदर्थं प्रयतते। तथाहि स आत्मनः गुणान् अतिशयेन प्रकटयति। तथा च स्वस्य यशः कीर्तयति। यतो हि दुर्जनसंसर्गापेक्षया महद्भिः सह विरोधः अपि श्रेयस्करम्। येन ऐश्वर्यम् उत्कर्षं गच्छति। कामक्रोधादीन् षट् रिपून् विवेकेन जित्वा मनुना उपदिष्टं प्रजाशासनं पालयति। किञ्च, तेन यशः लब्धुम् इच्छति। अस्मिन् समये इदं करणीयं, तस्मिन् समये तत् करणीयम् इति रीत्या दिनं विभज्य सुनियमेन सर्वं कार्यं करोति। एवम् आलस्यरहितः सन् प्रजासु स्वस्य पुरुषकारं प्रदर्शयति। स राजा दुर्योधनः अहङ्कारं परित्यज्य भृत्यान् तथा सम्पादितवान् येन जनाः भृत्यान् राज्ञः सखीन् इव मन्यन्ते। ते च भृत्याः राजानं सखायं मन्यन्ते। राजा दुर्योधनःअपि तैः सह तथा व्यवहरति। एवं बन्धून् तथा



सम्पादितवान् येन जनाः राज्ञः बन्धून् तस्य भ्रातृन् इव मन्यन्ते। राजा अपि तैः सह भ्रातृवत् आचरति। स्वस्य भ्रातृन् एवं सम्पादितवान् येन जनाः तान् प्रभून् मन्यन्ते। एवं स स्वस्य साधुतां प्रकटयति। सः धर्मः अर्थः कामश्च समम् एव सेवनीयाः इति वचनं न अवलम्बते। स राजा धर्मार्थकामानां सम्यक् विभागं कृत्वा यथाकालं तान् सेवते। अर्थात् यस्मिन् समये यः पुरुषार्थः सेव्यः तदा तम् एव सेवते न अन्यत्। अतः ते सर्वे पुरुषार्थाः तस्मिन् दुर्योधने बाधं विना एव तिष्ठन्ति। अतः तस्य धर्मार्थकामाः सदा एव अतिशयेन वृद्धिं प्राप्नुवन्ति। तस्य राज्ञः दुर्योधनस्य सामनीतिः अर्थवितरणं विना न प्रवृत्ता भवति। तस्य बहुलम् अर्थवितरणम् अपि सत्कारं विना प्रवृत्तं न भवति। एवमेव तस्य दुर्योधनस्य प्रशंसनीयः सत्कारः अनुरागेण विना प्रवृत्तः न भवति। अर्थात् तस्य सामनीतिः धनयुक्ता अस्ति। यस्य उपरि सः प्रसन्नः भवति तस्मै धनं ददाति। धनं च ससम्मानं प्रयच्छति न तु निरादरपूर्वकम्। अर्थात् गुणिनः पुरुषस्य एव सः सत्कारं करोति न तु निर्गुणस्य। जितेन्द्रियः सः दुर्योधनः न हि धनानि प्राप्तुम् इच्छन्, न च कोध्रेन कमपि दण्डयति। अपि तु लोभादिकारणरहितः सन् "राज्ञः मम धर्म एव यत् दण्ड्यानां दण्डनम् अदण्ड्यानां क्षमाकरणं च"इति मत्वा धर्मं चरति। अतः गुरूपदिष्टेन दण्डेन शत्रौ तथा स्वकीयपुत्रे स्थितं धर्मस्य व्यतिक्रमम् अधर्मं निवारयति।



## पाठान्तप्रश्नाः

१. का नाम मानवी पदवी।

२. अरिषड्वर्गाः के।

३. कथं दुर्योधनस्य त्रिगणः परस्परं न बाधते।

४. मानवीं पदवीं प्रपित्सुना दुर्योधनेन कीदृशो यत्नो विधीयते।

५. युधिष्ठिरं नयमार्गेण जिगीषुः जिह्मः दुर्योधनः किं कुर्वते।

६. दुर्योधनस्य सामदानादिप्रयोगनीतिः कथम् आसीत्।

७. तस्य दुर्योधनस्य दण्डविधिः कथम् आसीत् इति वर्ण्यताम्।

८. समानार्थकानि धातुरूपाणि मेलयत।

| **क-स्तम्भः** | **ख-स्तम्भः** |
|---|---|
| १. बाधते | क. निवारयति। |
| २. तनोति | ख. बोधयते। |
| ३. निहन्ति | ग विस्तारयति। |
| ४. समीहते | घ. प्रभवति। |
| ५.प्रवर्तते | ङ. प्रतिबध्नाति। |
| ६. दर्शयते | च. चेष्टते। |



उत्तराणि - १-ङ, २-ग, ३-क, ४-च, ५-घ, ६-ख।



## किमधिगतम्

१) दुर्योधनः कथं कपटेन प्रजाः वशीकरोति इति अस्मात् पाठात् ज्ञायते।

२) राजा दुर्योधनः राजनीतौ कुशलः आसीत् इत्यपि ज्ञायते।

३) राजकार्ये दण्डनीतिः कथं भवितव्यम् इति स्पष्टं भवति।

४) राजा दुष्टश्चेत् प्रजानां का अवस्था भवति इति बुध्यते।

५) कथं पदानां सन्धिविच्छेदः कार्यः इति बुध्यते अस्मात् पाठात्।

६) नूतनशब्दैः सह तेषाम् अर्थानाम् अपि परिचयः प्राप्तः।



## पाठगतप्रश्नानामुत्तराणि

**उत्तराणि-१**

१. दुर्योधनः।

२. पराभवम्।

३. नयेन।

४. वनाधिवासिनः युधिष्ठिरात्।

५. जगतीम्।

**उत्तराणि-२**

६. दुर्योधनः।

७. दुर्योधनः।

८. भवतः जिगीषया।

९. भूतिं समुन्नयन्।

१०. प्रतारकः।

**उत्तराणि-३**

११. दुर्योधनेन।

१२. नक्तंदिवं विभज्य।



१३. अगम्यरूपां मानवीं पदवीम्।

१४. आलस्यरहितेन।

१५. पुरुषकारः।

**उत्तराणि-४**

१६. दुर्योधनः।

१७. प्रीतियुजः सखीन् इव।

१८. भ्रातृरूपेण।

१९. कृताधिपत्याम् इव साधु।

२०. आत्मीयान्।

**उत्तराणि-५**

२१. दुर्योधनस्य।

२२. समपक्षपातया।

२३. त्रिगणः।

२४. धर्मः, अर्थः, कामः।

२५. सख्यम्।

**उत्तराणि-६**

२६. दानवर्जितम्।

२७. सत्क्रियां विना।

२८. विशेषशालिनी।

२९. गुणानुरोधेन विना।

३०. प्रियवचनम्।

**उत्तराणि-७**

३१. धर्मविप्लवम्।

३२. वसूनि अवाञ्छन्।

३३. गुरूपदिष्टेन दण्डेन।

३४. रिपौ सुते च।

३५. क्रोधः।

---

॥ इति विंशः पाठः ॥

---

## २१

# शङ्कितस्य दुर्योधनस्य नीतिकौशलम्

## प्रस्तावना

युधिष्ठिरात् भीतोऽपि दुर्योधनः सततम् आत्मानं भयरहितं प्रकटयति स्म। स्वयम् अविश्वस्तोऽपि विश्वस्तवद् व्यवहरति स्म। सन्देहयुक्तः सन् स्वस्य रक्षार्थम् विश्वस्तान् आत्मीयान् स्वकीये परकीये च राज्ये सर्वत्र संस्थापितवान्।सामदानदण्डभेदानां चतुर्णाम् उपायानां विनियोगे कुशलेन दुर्योधनेन यथोचितं प्रयुक्ताः एते चत्वारः उपायाः कथं परस्परं स्पर्धां कुर्वन्तः तस्य दुर्योधनस्य सर्वेषु कार्येषु सफलतां तथा समृद्धिं सम्पादयन्ति स्म तद् भवन्तः पाठेऽस्मिन् ज्ञास्यन्ति। बहूनां नृपाणां रथाश्वैः व्याप्तं दुर्योधनस्य सभाभवनाङ्गणं कथं शोभते स्म तदपि ज्ञास्यन्ति। एतेन च राज्ञः दुर्योधनस्य प्रभुत्वस्य आतिशय्यं विशेषेण प्रकाशितोऽभूत् इति पठिष्यन्ति। बहुदिनं यावत् प्रजासु कल्याणं वितरतः दुर्योधनस्य धनाधिपतेः कुवेरस्य इव अस्य दयादाक्षिण्यादिभिः गुणैः कथं पृथिवी द्रवीभूता सञ्जाता। किञ्च तेन सम्मानिताः वीरसैनिकाः कीदृशा आसन् इति पाठात् अस्मात् ज्ञास्यते। सर्वे राजानः प्रसन्नाः सन्तः कथं तस्य शासनस्य अनुगमनं कुर्वन्ति स्म इति बोधः भविष्यति। तेन च राज्ञा दुर्योधनेन शास्त्रानुसारं केन प्रकारेण यागाः अनुष्ठीयते स्म इति स्पष्टीभविष्यति। बलबद्भिः सह विरोधः दुष्परिणामः भवति इति जानता तेन कथं तादृशम् आचरति इति जिज्ञासापि दूरीभविष्यति।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- दुर्योधनः शङ्कितः सन् किं करोति इति ज्ञास्यति।
- सर्वे नृपाः कथं तस्य अनुगताः आसन् इति स्पष्टं भविष्यति।
- सः प्रजानां कल्याणाय किं किं कृतवान् आसीत् इति ज्ञास्यति।
- तस्य सैनिकाः कीदृशाः आसन् इति स्पष्टीभविष्यति।
- बलवद्भिः सह विरोधस्य किं फलम् इति ज्ञास्यति।
- श्लोकानां सुष्ठु व्याख्यानं कथं करणीयम् इति च अधिगमिष्यति।

## २१.१) मूलपाठः

**विधाय रक्षान्परितः परेतरानशङ्किताकारमुपैति शङ्कितः ।**
**क्रियापवर्गेष्वनुजीविसात्कृताः कृतज्ञतामस्य वदन्ति सम्पदः ।। १.१४ ।।**



अनारतं तेन पदेषु लम्भिता विभज्य सम्यग्विनियोगसत्क्रियाम् ।
फलन्त्युपायाः परिबृंहितायतीरुपेत्य संघर्षमिवार्थसम्पदः ।। १.१५ ।।

अनेकराजन्यरथाश्वसंकुलं तदीयमास्थाननिकेतनाजिरम्।
नयत्ययुग्मच्छदगन्धिरार्द्रतां भृशं नृपोपायनदन्तिनां मदः ।। १.१६ ।।

सुखेन लभ्या दधतः कृषीवलैरकृष्टपच्या इव सस्यसम्पदः ।
वितन्वति क्षेममदेवमातृकाश्चिराय तस्मिन्कुरवश्चकासति ।। १.१७ ।।

महौजसो मानधना धनार्चिता धनुर्भृतः संयति लब्धकीर्तयः ।
न संहतास्तस्य न भेदवृत्तयः प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ।। १.१८ ।।

उदारकीर्तेरुदयं दयावतः प्रशान्तबाधं दिशतोऽभिरक्षया ।
स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी ।। १.१९ ।।

महीभुजां सच्चरितैश्चरैः क्रियाः स वेद निःशेषमशेषितक्रियः ।
महोदयैस्तस्य हितानुबन्धिभिः प्रतीयते धातुरिवेहितं फलैः ।। १.२० ।।

न तेन सज्यं क्वचिदुद्यतं धनुर्न वा कृतं कोपविजिह्ममाननम् ।
गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनम् ।। १.२१ ।।

स यौवराज्ये नवयौवनोद्धतं निधाय दुःशासनमिद्धशासनः ।
मखेष्वखिन्नोऽनुमतः पुरोधसा धिनोति हव्येन हिरण्यरेतसम् ।। १.२२ ।।

प्रलीनभूपालमपि स्थिरायति प्रशासदावारिधि मण्डलं भुवः ।
स चिन्तयत्येव भियस्त्वदेष्यतीरहो दुरन्ता बलवद्विरोधिता ।। १.२३ ।।

## २१.२) साम्प्रतं मूलपाठम् अवगच्छाम

**विधाय रक्षान्परितः परेतरानशङ्किताकारमुपैति शङ्कितः।**
**क्रियापवर्गेष्वनुजीविसात्कृताः कृतज्ञतामस्य वदन्ति सम्पदः।।१४**

**अन्वयः** - शङ्कितः (सन्नपि) परितः परेतरान् रक्षान् विधाय अशङ्किताकारम् उपैति। क्रियापवर्गेषु अनुजीविसात्कृताः सम्पदः अस्य कृतज्ञतां वदन्ति।

**अन्वयार्थः** - शङ्कितः सन्देहयुक्तः सन्देहापन्नः सन् स दुर्योधनः, परितः सर्वतः सर्वत्र स्वकीयराज्ये परकीये च, परेतरान् परेभ्यः शत्रुभ्यः इतरान् विश्वस्तान् आत्मीयजनान्, रक्षान् रक्षकान्



रक्षन्ति गुप्तमन्त्रणादिकं ये तान् परवृत्तान्तज्ञाने कुशलान्, विधाय नियुज्य, अशङ्किताकारं विश्वस्ताकृतिम्, उपैति प्राप्नोति। स्वयं शङ्कितः अपि अशङ्किताकारम् एव दर्शयति इत्यर्थः। क्रियापवर्गेषु कार्यावसानेषु कर्मणां समाप्तिषु, अनुजीविसात्कृताः अनुजीविनां भृत्यानाम् आयत्तीकृताः अनुजीविसात्कृताः भृत्येभ्यः दत्ताः इत्यर्थः। सम्पदः सम्पत्तयः धनानि, अस्य दुर्योधनस्य, कृतज्ञताम् उपकारज्ञताम्, वदन्ति ज्ञापयन्ति प्रकाशयन्ति।

**सरलार्थः -** शत्रूणां बलस्य आधिक्यात् राजा दुर्योधनः शङ्कितः अस्ति। अतः स्वकीये परकीये च राज्ये आत्मीयान् जनान् संरक्षकरूपेण संस्थाप्य विश्वस्ताकृतिं प्राप्नोति। मनसि भयम् अनुभवन् अपि आत्मानं भयरहितं प्रकटयति। कर्मणाम् अवसानेषु सेवकेभ्यः समर्पिताः सम्पत्तयः दुर्योधनस्य कृतज्ञतां च प्रकाशयन्ति।

**तात्पर्यार्थः -** अत्र श्लोके अस्मिन् दुर्योधनस्य भयभावः, सुरक्षाव्यवस्था तथा धनादीनां प्रभूतदानेन कृतज्ञतादिभावाः निरूपिताः। तथाहि स्वयम् निरन्तरम् अविश्वस्तः सन् अपि विश्वस्तवद् व्यवहरति। किञ्च सन्देहयुक्तः भयाकुलः अपि निर्भीकतां दर्शयति। अत एव सः स्वस्य रक्षार्थम् विश्वस्तान् आत्मीयान् सर्वत्र संस्थाप्य तिष्ठति। किञ्च स्वस्य कृतज्ञतां प्रकटयितुं कार्यावसाने भृत्येभ्यः धनानि समर्पयति।

**व्याकरणविमर्शः -**

- परेतरान्-परेभ्य इतरे परेतरे तान् परेतरान्।
- अशङ्किताकारम् - शङ्का जाता अस्य इति शङ्कितः, न शङ्कितः अशङ्कितः, अशङ्कितः आकारो यस्मिन् इति अशङ्किताकारम् (क्रियाविशेषणम्)।
- कृतज्ञताम् - कृतं जानाति इति कृत्तज्ञः तस्य भावःकृतज्ञता, ताम् कृतज्ञताम्।
- विधाय – वि-धा-धातोः क्त्वोः ल्यपि रूपम्। उपैति - उप-इण्-धातोः लटि रूपम्।

**सन्धिकार्यम्-**

- क्रियापवर्गेष्वनुजीविसात्कृताः = क्रियापवर्गेषु + अनुजीविसात्कृताः।

**प्रयोगपरिवर्तनम् -**

शङ्कितेन तेन परितः परेतरान् रक्षान् विधाय अशङ्किताकारम् उपेयते। क्रियापवर्गेषु अनुजीविसात्कृताभिः सम्पद्भिः अस्य कृतज्ञता उद्यते।

**अलङ्कारालोचना** -

- अत्र वृत्यनुप्रासालङ्कारः विद्यते। रकार-तकारयोः असकृत् आवृत्तिरत्र हेतुः।

**कोषः** -

- परितः - "समन्ततस्तु परितः सर्वतो विष्वगित्यपि"इत्यमरः।





## पाठगतप्रश्नाः-१

१. कः अशङ्किताकारम् उपैति।

२. स च कीदृशः सन् अशङ्किताकारम् उपैति।

३. स च केन उपायेन अशङ्किताकारम् उपैति।

४. कीदृशाः सम्पदः तस्य कृतज्ञतां वदन्ति।

५. क्रियापवर्गेषु इत्यस्य कः अर्थः।

**अनारतं तेन पदेषु लम्भिता विभज्य सम्यग्विनियोगसत्क्रियाः।**
**फलन्त्युपायाः परिबृंहितायतीरुपेत्य संघर्षमिवार्थसम्पदः।।१५**

**अन्वयः** - तेन पदेषु सम्यक् विभज्य लम्भिताः विनियोगसत्क्रियाः उपायाः सङ्घर्षम् उपेत्य इव परिबृंहितायतीः अर्थसम्पदः अनारतं फलन्ति।

**अन्वयार्थः** - तेन दुर्योधनेन, पदेषु उपादेयवस्तुषु कर्तव्येषु, सम्यक् यथायोग्यम् समुचितरूपेण, विभज्य विविच्य विभाजनं कृत्वा, विनियोगसत्क्रियाः विनियोगेन व्यवहारेण सत्कारवन्तः, लम्भिताः प्रापिताः यथास्थानं प्रयुक्ताः, उपायाः सामदानदण्डभेदाः चत्वारः राजनीतेः उपायाः, संघर्षम् परस्परं स्पर्धाभावम्, उपेत्य इव प्राप्य इव, परिबृंहितायतीः परिबृंहिताः वृद्धिं गताः आयतिः भविष्यत् कालः यासां ताः परिबृंहितायतीः स्थिराः इत्यर्थः। अर्थसम्पदः धनसम्पत्तीः, अनारतं सततं निरन्तरम्, फलन्ति उत्पादयन्ति प्रसुवते।

**सरलार्थः** - स राजा दुर्योधनः उपादेयवस्तुषु कर्त्तव्यानुसारं यथायोग्यं विभागं कृतवान्। ततश्च तेन समुचितरूपेण ते चत्वारः राजनीतेः उपायाः प्रयुक्ताः। ते च परस्परं स्पर्धाभावं सम्प्राप्य तस्य अर्थसम्पत्तीः स्थिरां कुर्वन्ति। अर्थात् समुचितरूपेण प्रयुक्ताः एते सर्वे उपायाः सर्वत्र तस्मै साफल्यं समृद्धिं संयच्छन्ति।

**तात्पर्यार्थः** - प्रस्तुते अस्मिन् श्लोके वर्ण्यते यत् सामदानदण्डभेदानां चतुर्णाम् उपायानां विनियोगे दुर्योधनः कुशलः।अपि च तेन यथोचितं प्रयुक्ताः एते चत्वारः उपायाः। ते परस्परं स्पर्धां कुर्वन्तः तस्य दुर्योधनस्य सर्वेषु कार्येषु सफलतां तथा समृद्धिं सम्पादयन्ति।

**व्याकरणविमर्शः -**

- विनियोगसत्क्रियाः - विनियोग एव सत्क्रिया येषां ते विनियोगसत्क्रियाः।
- अर्थसम्पदः - अर्थाः एव सम्पदः अर्थसम्पदः।
- परिबृंहितायतीः - परिबृंहितः आयतिः यासां ताः परिबृंहितायतः, ताः परिबृंहितायतीः।
- लम्भिताः - लभ्-धातोः क्त-प्रत्यये प्रथमपुरुषबहुवचने रूपम्।

- विभज्य – वि-भज्-धातोः क्त्वोः ल्यपि रूपम्।

**सन्धिकार्यम्-**

- सम्यग्विनियोगसत्क्रिया = सम्यक् + विनियोगसत्क्रिया।
- फलन्त्युपायाः = फलन्ति + उपायाः।

**प्रयोगपरिवर्तनम् -**

तेन पदेषु सम्यक् विभज्य लम्भितैः विनियोगसत्क्रियैः उपायैः संघर्षम् उपेत्य इव परिबृंहितायतयः अर्थसम्पदः फल्यन्ते।

**कोषः -**

- अनारतम् - "सततानारताश्रान्तसन्तताविरतानिशम्"इत्यमरः।



## पाठगतप्रश्नाः-२

६. केन कुत्र च ते उपायाः लम्भिताः।

७. ते च पदेषु तेन कथं लम्भिताः।

८. ते च उपायाः कथं किं फलन्ति।

९. लम्भिताः ते उपायाः किम् इव फलन्ति।

१०. परिबृंहितायतीः इत्यस्य कः अर्थः।

---

**अनेकराजन्यरथाश्वसंकुलं तदीयमास्थाननिकेतनाजिरम्।**
**नयत्ययुग्मच्छदगन्धिरार्द्रतां भृशं नृपोपायनदन्तिनां मदः।।१६**

**अन्वयः -** अयुग्मच्छदगन्धिः नृपोपायनदन्तिनां मदः अनेकराजन्यरथाश्वसंकुलं तदीयम् आस्थाननिकेतनाजिरं भृशम् आर्द्रतां नयति।

**अन्वयार्थः -** अयुग्मच्छदगन्धिः अयुग्मच्छदस्य सप्तपर्णपुष्पस्य गन्ध इव गन्धः यस्य असौ सप्तपर्णपुष्पसुगन्धिः, नृपोपायनदन्तिनां राज्ञाम् उपहारभूतानां गजानां राजोपहारहस्तिनाम्, मदः गण्डस्थलनिःसृतजलविशेषः, अनेकराजन्यरथाश्वसङ्कुलम् अनेकेषां बहूनाम् राजन्यानां क्षत्रियाणां रथाश्वेन संकुलं व्याप्तम् आकीर्णम् अनेकराजन्यरथाश्वसङ्कुलं नानरथपतिवृन्दरथघोटकसङ्कीर्णम्, तदीयम् दुर्योधनीयम् दुर्योधनसम्बन्धि, आस्थाननिकेतनाजिरम् आस्थानस्य सभायाः यत् निकेतनं गृहं मण्डपः तस्य अजिरम् अङ्गणम् आस्थाननिकेतनाजिरम् सभामण्डपाङ्गनम्, भृशम् अत्यर्थम् अत्यधिकम्, आर्द्रताम् पङ्किलत्वम्, नयति प्रापयति।



**सरलार्थः -** सप्तपर्णपुष्पस्य सुगन्ध इव सुगन्धयुतं राजभिः उपहारभूतानां गजानां मदजलं दुर्योधनस्य अङ्गणं पङ्किलतां प्रापयति। तत् च सभाभवनाङ्गणं बहूनां नृपाणां रथाश्वैः व्याप्तं वर्तते। एतेन राज्ञः दुर्योधनस्य प्रभुत्वस्य आतिशय्यं विशेषेण प्रकाशितो भवति।

**तात्पर्यार्थः -** प्रस्तुते अस्मिन् श्लोके दुर्योधनस्य अतिशयः प्रभावः निरूपितः। तथाहि बहवः राजानः तस्मै राज्ञे बहून् मदमत्तान् गजान् प्रभूतान् अश्वान् च प्रीत्या यच्छन्ति। तैः गजाश्वादिभिः तस्य राज्ञः सभामण्डपस्य प्राङ्गणम् प्रतिक्षणं परिपूर्यते। गजानां मदावारीणां स्रावैः सिक्तं भवति। एवं गजराजैः पूरितं तस्य अङ्गणं दुर्योधनस्य प्रभुत्वम् एव अतिशयेन प्रकाशयति।

**व्याकरणविमर्शः -**

- अनेकराजन्यरथाश्वसङ्कुलम्-राज्ञां समूहो राज्ञाम् अपत्यानि पुमांसो वा राजन्याः क्षत्रियाः। अनेके राजन्या इति अनेकराजन्याः। रथाश्च अश्वाश्च इति रथाश्वम्, तेषाम् अनेकराजन्यानां रथाश्वं तद् अनेकराजन्यरथाश्वं, तेन अनेकराजन्यरथाश्वेन सङ्कुलम् इति अनेकराजन्यरथाश्वसङ्कुलम्।
- आस्थाननिकेतनाजिरम्-आस्थानस्य निकेतनम् आस्थाननिकेतन, तस्य आस्थाननिकेतनस्य आजिरमिति आस्थाननिकेतनाजिरम् ।
- अयुग्मच्छदगन्धिः - अयुग्मानि ( विषमाणि) सप्त छदाः (पत्राणि) यस्य सः, अयुग्मच्छदः । अयुग्मच्छदस्य गन्ध इव गन्धो यस्य सः अयुग्मच्छदगन्धिः।
- नृपोपायनदन्तिनाम् - उपायनानि दन्तिनः इति उपायनदन्तिनः। नृपाणां ये उपायनदन्तिनः ते नृपोपायनदन्तिनः, तेषां नृपोपायनदन्तिनाम्।

**सन्धिकार्यम्-**

- नयत्ययुग्मच्छदगन्धिरार्द्रताम् = नयति + अयुग्मच्छदगन्धिः + आर्द्रताम्।

**प्रयोगपरिवर्तनम् -**

अयुग्मच्छदगान्धिना नृपोपायनदन्तिनां मदेन अनेकराजन्यरथाश्वसंकुलं तदीयम् आस्थाननिकेतनाजिरं भृशम् आर्द्रतां नीयते।

**कोषः -**

- आजिरम् - “अङ्गनं चत्वराङ्गिरे"इत्यमरः।



## पाठगतप्रश्नाः-३

११. दुर्योधनस्य किम् आर्द्रतां नयति।

१२. तच्च कथम् आर्द्रतां नयति।

१३. तच्च कीदृशम्।

१४. किं तस्य आस्थाननिकेतनाजिरम् आर्द्रतां नयति।



१५. अयुग्मच्छदगन्धिभिः इत्यस्य कः अर्थः।

---

**सुखेन लभ्या दधतः कृषीवलैरकृष्टपच्या इव सस्यसम्पदः।**
**वितन्वति क्षेममदेवमातृकाश्चिराय तस्मिन्कुरवश्चकासति।।१७**

**अन्वयः** - चिराय तस्मिन् क्षेमं वितन्वति (सति) अदेवमातृकाः कुरवः अकृष्टपच्याः इव कृषिवलैः सुखेन लभ्याः सस्यसम्पदः दधतः चकासति।

**अन्वयार्थः** - चिराय चिरकालं बहुकालेन, तस्मिन् दुर्योधने, क्षेमं प्रजासु कल्याणकुशलम्, वितन्वति कुर्वति सति, अदेवमातृकाः नदीमातृकाः नदीजलजीविनः, कुरवः कुरूणां निवासाः कुरवः देशविशेषाः, अकृष्टपच्याः अकर्षणसिद्धाः हलादिभिः कर्षणं विनैव सस्यजनितारः, इव, कृषीवलैः कर्षकैः क्षेत्रपतिभिः, सुखेन अल्पप्रयासेन, लभ्याः प्राप्याः लब्धुं शक्याः, सस्यसम्पदः सस्यराजीः धान्यसम्पत्तीः, दधतः धारयन्तः, चकासति शोभन्ते विराजन्ते।

**सरलार्थः** - बहुदिनं यावत् दुर्योधनः प्रजासु कल्याणं वितरन् अस्ति। तस्मिन् कल्याणविधानकाले कृत्रिमाभिः नदीभिः पालिताः नदीनां जलम् आश्रित्य एव कुरवः देशाः जीवन्ति। हलादिभिः कर्षणं विना एव एते कुरुदेशाः सस्यानाम् उत्पादकाः। तस्मात् कृषकैः सस्यसम्पदः अल्पायासेन लब्धुं शक्याः। एवं सस्यसम्पत्तीः धारयन्तः कुरुदेशाः शोभन्ते।

**तात्पर्यार्थः** - प्रस्तुते अस्मिन् श्लोके प्रतिपाद्यते यत् प्रजानां हितसाधने दुर्योधनः संलग्नः अस्ति। तस्यैव प्रयासेन समृद्धः कुरुदेशः शोभते। तथाहि प्रजापालनाय दुर्योधनः कृत्रिमं जलप्रवाहं निर्माय स्वराज्यं नदीमातृकं करोति। येन प्रजाः सुखेन सस्योत्पादनं कर्तुं शक्नुवन्ति। किञ्च स्वराज्यात् दुर्भिक्षं दूरीकरोति। एवं प्रजानाम् अनुरञ्जनात् प्रसिद्धः स दुर्योधनः सारल्येन वशीकर्तुं न योग्यः इति फलितम् अत्र।

**व्याकरणविमर्शः -**

- देव एव माता येषां ते देवमातृकाः, न देवमातृका इति अदेवमातृकाः ।
- कृषीवलैः - कृषिरस्ति येषां ते कृषीवलास्तैः कृषीवलैः । 'रजःकृषि-' इत्यनेन वलच्-प्रत्ययः।
- अकृष्टपच्याः - कृष्टेन पच्यन्ते इति कृष्टपच्याः, न कृष्टपच्याः इति अकृष्टपच्याः।
- लभ्याः - लभ्-धातोः यत्-प्रत्यये रूपमिदम्।
- चकासति - चकास्-धातोः लटि प्रथमपुरुषबहुवचने रूपमिदम्।

**सन्धिकार्यम्-**

- कृषिवलैरकृष्टपच्याः = कृषिवलैः + अकृष्टपच्याः।
- अदेवमातृकाश्चिराय = अदेवमातृकाः + चिराय।

**प्रयोगपरिवर्तनम् -**



चिराय तस्मिन् क्षेमं वितन्वति (सति) अदेवमातृकैः कुरुभिः अकृष्टपच्या इव कृषीवलैः सुखेन लभ्याः दधद्भिः चकास्यते।

**कोषः** -

- देवमातृकः - "देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः। स्यान्नदीमातृको देवमातृकश्च यथाक्रमम्।।"इत्यमरः।



## पाठगतप्रश्नाः-४

१६. कुरवः किं दधतः चकासति।

१७. ताश्च सम्पदः कैः सुखेन लभ्याः।

१८. कुरवः किम् इव ताः सम्पदः लभ्याः आसन्।

१९. कुरवः कदा सस्यसम्पदः दधतः चकासति।

२०. अदेवमातृकाः इत्यस्य कः अर्थः।

---

**उदारकीर्तेरुदयं दयावतः प्रशान्तबाधं दिशतोऽभिरक्षया।**
**स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी।।१८**

**अन्वयः** - उदारकीर्तेः दयावतः अभिरक्षया प्रशान्तबाधम् उदयं दिशतः वसूपमानस्य अस्य गुणैः उपस्नुता मेदिनी स्वयं वसूनि प्रदुग्धे।

**अन्वयार्थः** - उदारकीर्तेः उदारा उत्कृष्टा कीर्तिः यशः यस्य तस्य उदारकीर्तेः महायशसः, दयावतः करुणावतः, अभिरक्षया सर्वथा रक्षणेन, प्रशान्तबाधम् प्रशान्ता निवारिता बाधा अन्तरायः यस्मिन् तत् प्रशान्तबाधं प्रशमितोपद्रवम्, उदयम् अभ्युदयम् उन्नतिम्, दिशतः विधातुः, वसूपमानस्य वसुः कुवेरः उपमानं यस्य तस्य वसूपमानस्य कुबेरोपमस्य, अस्य दुर्योधनस्य, गुणैः औदार्यगाम्भीर्यशौर्यादिभिः, उपस्नुता द्रवीभूता, मेदिनी वसुन्धरा पृथिवी, स्वयम् आत्मना एव, वसूनि धनानि, प्रदुग्धे सुखेन प्रददाति।

**सरलार्थः** - महाकीर्तिमान् दुर्योधनः दयान्वितः सन् प्रजानां सर्वथा रक्षणं करोति। तथा संरक्षणेन च प्रजानाम् उपद्रवरहितम् अभ्युदयं संपादयति। धनाधिपतेः कुवेरस्य इव अस्य दुर्योधनस्य दयादाक्षिण्यादिभिः गुणैः पृथिवी द्रवीभूता सञ्जाता। एवं वसुन्धरा द्रवीभूता सती स्वयम् एव धनानि प्रयच्छति। अर्थात् याचनां विना एव सुखेन वसूनि प्रददाति।

**तात्पर्यार्थः** - कथं सद्गुणैः भूषितः दुर्योधनः सर्वतः प्रजाः रक्षति। किञ्च कथं तासां प्रजानाम् अभ्युदयं साधयति तदेव प्रस्तुते अस्मिन् श्लोके वर्ण्यते। तथाहि यथा कापि नवप्रसूता गौः

कोमलतृणदानेन तुष्टा सती स्वयं दुग्धं क्षरति। तद्वत् निर्जले देशे प्रजानां कल्याणविधानात् सन्तुष्टाः प्रजाः राज्ञः आज्ञां विना एव समये करं ददाति।

**व्याकरणविमर्शः -**

- उदारकीर्त्तेः - उदारा कीर्त्तिर्यस्य स उदारकीर्तिः, तस्य उदारकीर्त्तेः।
- दयावतः - दयाऽस्यास्तीति दयावान्, तस्य दयावतः।
- वसूपमानस्य - वसुः उपमानं यस्य स वसूपमानः,तस्य वसूपमानस्य।
- दिशतः - दिश्-धातोः शतरि रूपमिदम्।
- प्रदुग्धे - प्र-दुह्-धातोः आत्मनेपदिनः लटि रूपमिदम्।

**सन्धिकार्यम्-**

- उदारकीर्तेरुदयम् = उदारकीर्तेः + उदयम्।
- दिशतोऽभिरक्षया = दिशतः + अभिरक्षया।

**प्रयोगपरिवर्तनम् -**

उदारकीर्तेः दयावतः अभिरक्षया प्रशान्तबाधम् उदयं दिशतः वसूपमानस्य अस्य गुणैः उपस्नुतया मेदिन्या स्वयं वसूनि प्रदुह्यन्ते।

**कोषः -**

- दया - "कृपा दयाऽनुकम्पा स्याद्"इत्यमरः।



## पाठगतप्रश्नाः-५

२१. मेदिनी स्वयं किं करोति।

२२. सा च कीदृशी।

२३. अत्र दुर्योधनः केन उपमितः।

२४. स दुर्योधनः कीदृशम् उदयं दिशति।

२५. कीदृशः दुर्योधनः प्रजाः अभिरक्षति।

---

**महौजसो मानधना धनार्चिता धनुर्भृतः संयति लब्धकीर्तयः।**
**न संहतास्तस्य न भिन्नवृत्तयः प्रियाणि वाञ्छन्त्यसुभिः समीहितुम्।।१९**

**अन्वयः** - महौजसः मानधनाः धनार्चिताः संयति लब्धकीर्तयः धनुर्भृतः न संहताः न भिन्नवृत्तयः ( अपि तु) तस्य असुभिः प्रियाणि समीहितुं वाञ्छन्ति ।



**अन्वयार्थः** - महौजसः अतितेजस्विनः प्रतापिनः, मानधनाः मानः अभिमानः एव धनं येषां ते मानधनाः मनस्विनः, धनार्चिताः धनैः वित्तैः अर्चिताः सम्मानिताः ये ते धनार्चिताः धनसत्कृताः, संयति समरे युद्धे, लब्धकीर्त्तयः प्राप्तयशसः, धनुर्भृतः धनुर्धराः, न संहताः न संमिलिताः परस्परं स्वार्थसिद्ध्यै न मिलिताः इत्यर्थः, तथा च, न भिन्नवृत्तयः न पृथक् व्यापाराः, अपि तु सर्वे वीराः, तस्य दुर्योधनस्य, असुभिः प्राणैः, (अपि) प्रियाणि अभीष्टानि शुभानि, समीहितुं विधातुम्, वाच्छन्ति इच्छन्ति अभिलषन्ति।

**सरलार्थः** - महान्तः तेजस्विनः प्रभूतधनदानेन सम्मानिताः दुर्योधनस्य वीराः सैनिकाः युद्धे यशः प्राप्ताः। ते च धनुर्धराः स्वार्थसिद्ध्यर्थं न समागताः। किञ्च ते स्वस्वामिनः विरुद्धाः न सन्ति। अपि तु स्वामिनः प्रयोजनस्यैव साधकाः। तदर्थं च स्वेषां प्राणदानम् अपि कर्तुं ते अभिलषन्ति।

**तात्पर्यार्थः** - प्रस्तुते अस्मिन् श्लोके वीराणां सैनिकानां सुन्दरगुणानां वर्णनं क्रियते महाकविना भारविना। ते स्वामिनः हितसाधकाः। अतो लघुना उपायेन स दुर्योधनः न वश्यः इति किरातस्य अभिप्रायः। यतः तेजस्विनः ते धनुर्धराः सैनिकाः स्वार्थसिद्ध्यर्थं न समागताः। अपि तु ते स्वस्वामिनः प्रयोजनानि स्वप्राणव्ययेनापि संपादयितुम् इच्छन्ति।

**व्याकरणविमर्शः -**

- महौजसः - महद् ओजो येषां ते महौजसः इति बहुव्रीहिसमासः।
- मानधनाः - मान एव धनं येषां ते मानधनाः इति बहुव्रीहिसमासः।
- लब्धकीर्त्तयः - लब्धा कीर्तिर्यैस्ते लब्धकीर्त्तयः इति बहुव्रीहिसमासः।
- धनुर्भृतः - धनूंषि बिभ्रतीति धनुर्भृत्, ते धनुर्भृतः।
- समीहितुम् - सम्-ईह-धातोः तुमुन्-प्रत्यये रूपमिदम्।

**सन्धिकार्यम्-**

- वाञ्छन्त्यसुभिः = वाञ्छन्ति + असुभिः।
- संहतास्तस्य = संहताः + तस्य।

**प्रयोगपरिवर्तनम् -**

महौजोभिः मानधनैः धनार्चितैः धनुर्भृद्भिः संयति लब्धकीर्तिभिः न संहतैः न भिन्नवृत्तिभिः भूयन्ते । किन्तु असुभिरपि प्रियाणि समीहितुं वाञ्छ्यन्ते।

**कोषः** -

- असुः - "पुंसि भूम्न्यसवः प्राणाश्चैवं जीवोऽसुधारणम्"इत्यमरः।

##  पाठगतप्रश्नाः-६

२६. दुर्योधनस्य सैनिकाः कीदृशाः।

२७. ते कुत्र लब्धकीर्तयः।



२८. ते किं वाञ्छन्ति।

२९. कैश्च ते वाञ्छयन्ते।

३०. धनुर्भृतः ते कीदृशाः।

**महीभृतां सच्चरितैश्चरैः क्रियाः स वेद निःशेषमशेषितक्रियः।**
**महोदयैस्तस्य हितानुबन्धिभिः प्रतीयते धातुरिवेहितं फलैः।।२०**

**अन्वयः** - अशेषितक्रियः सच्च्चरितैः चरैः महीभृतां क्रियाः निःशेषं वेद। हितानुबन्धिभिः महोदयैः धातुः ईहितम् इव तस्य ( ईहितम्) फलैः,प्रतीयते ।

**अन्वयार्थः** - अशेषितक्रियः न शेषिताः न असमापिताः क्रियाः कर्तव्याणि येन सः असमापितक्रियः समापितकृत्यः, सः दुर्योधनः, सच्चरितैः शुद्धचरितैः, चरैः गूढचरैः, महीभृतां भूपतीनाम्, क्रियाः कार्याणि सकलव्यापारान्, निःशेषम् अशेषम् संपूर्णम्, वेद वेत्ति जानाति। (अथ) हितानुबन्धिभिः सदा कल्याणकरणतत्परैः, महोदयैः महानुभावैः अन्यैः भूपैः। धातुः ईश्वरस्य, ईहितं चेष्टितम्, इव, तस्य = दुर्योधनस्य, ईहितम् ईप्सितम्, फलैः परिणामैः, प्रतीयते ज्ञायते।

**सरलार्थः** - सकलानि राजकार्याणि समाप्य स दुर्योधनः शुद्धचरितैः अवञ्चकैः गुप्तचरैः च सर्वेषां भूपतीनां व्यवहारान् गूढरूपेण जानाति। किन्तु यथा विधाता किं कर्तुम् इच्छति इति तस्य कार्यैः एव ज्ञायते। तद्वत् तस्यापि दुर्योधनस्य मनसि ईप्सितं कर्म तस्य हितकारकैः परिणामैः एव ज्ञायते।

**तात्पर्यार्थः** - महाकविना भारविना प्रस्तुते अस्मिन् श्लोके स्वमन्त्रस्य गोपने तथा परवृत्तान्तस्य ज्ञाने दुर्योधनस्य चरव्यवस्था निरूपिता। तथाहि समापितक्रियः दुर्योधनः गुप्तचराणां साहाय्येन सर्वेषां राज्ञां गूढव्यवहारं सम्पूर्णं जानाति। तस्य मानसिकः संकल्पः तस्य कार्यस्य परिणामद्वारा प्रतीयते। अतः सः सारल्येन न जेयः इति विशेषः।

**व्याकरणविमर्शः -**

- महीभृताम् - महीं बिभ्रतीति महीभृतः, तेषां महीभृताम्।
- सच्चरितैः - सत् (शुभं) चरितं येषां ते सच्चरिताः इति बहुव्रीहिसमासः, तैः सच्चरितैः।
- अशेषितक्रियः - न शेषिता अशेषिता इति नञ्तत्पुरुषसमासः,अशेषिता क्रिया येन सः अशेषितक्रियः इति बहुव्रीहिसमासः।
- हितानुबन्धिभिः - हितम् अनुबध्नन्तीति हितानुबन्धिनः, तैः हितानुबन्धिभिः।
- वेद – विद्-धातोः लटि प्रथमपुरुषैकवचने रूपमिदम्।

**सन्धिकार्यम्-**

- सच्चरितैश्चरैः = सच्चरितैः + चरैः।
- धातुरिवेहितम् = धातुः + इव + ईहितम्।



- महोदयैस्तस्य = महोदयैः + तस्य।

**प्रयोगपरिवर्तनम् -**

अशेषितक्रियेण येन दुर्योधनेन सञ्चरितैश्चरैरन्येषां महीभृतां क्रियाः ज्ञायन्ते (विद्यन्ते) हितानुबन्धिना महोदयाः धातुरीहितमिव तस्य चेष्टितम्, फलैः प्रतियन्ति।

**अलङ्कारालोचना -**

- अस्मिन् श्लोके अपि धातुरिव तस्य इति साम्यप्रतिपादनात् उपमा अलङ्कारः।

**कोषः -**

- धाता - "स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृग्विधिः"इत्यमरः।



## पाठगतप्रश्नाः-७

३१. दुर्योधनः केषां क्रियाः निःशेषं वेद।

३२. स च कैः तत् वेद।

३३. स च दुर्योधनः कीदृशः।

३४. धातुः ईहितं केन प्रतीयते।

३५. कीदृशैः फलैः दुर्योधनस्य ईहितं प्रतीयते।

---

**न तेन सज्यं क्वचिदुद्यतं धनुः कृतं न वा कोपविजिह्ममाननम्।**
**गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनम्।।२१**

**अन्वयः -** तेन क्वचित् सज्यं धनुः न उद्यतं वा कोपविजिह्मम् आननम् न कृतं गुणानुरागेण नराधिपैः अस्य शासनं माल्यमिव शिरोभिः उह्यते।

**अन्वयार्थः -** तेन राज्ञा दुर्योधनेन, क्वचित् कुत्रापि, सज्यम् सगुणं समौर्वीकम् आरोपितमौर्वीकम्। धनुः चापं कार्मुकम्, न उद्यतम् न ऊर्ध्वीकृतम् उत्थापितम्, वा अथवा, कोपविजिह्मम् कोपेन क्रोधेन विजिह्मं वक्रं कोपविजिह्मम् क्रोधकुटिलम्, आननम् मुखम्, न कृतम् न विहितम्, नराधिपैः नरेन्द्रैः, अस्य दुर्योधनस्य,शासनम् आदेशवचनम्, गुणानुरागेन दयादानादिना स्नेहेन, अथवा गुणेषु सूत्रेषु अनुरागेण गुम्फितेन, माल्यम् स्रक् ग्रथितः पुष्पसमूहः, इव, शिरोभिः शीर्षैः, उह्यते धार्यते।

**सरलार्थः -** तेन राज्ञा दुर्योधनेन कुत्रापि आरोपितमौर्वीकं धनुः न उत्थापितम्। अथवा स्वकीयं मुखं कोपेन विकृतं न कृतम्। तथापि नृपतिभिः अस्य दुर्योधनस्य आदेशवचनं सादरं पुष्पमाला इव स्वीक्रियते। यथा गुणे सूत्रे संग्रथिता पुष्पमाला स्वमस्तके सादरं धार्यते। अर्थात् सर्वे राजानः प्रसन्नाः सन्तः तस्य शासनस्य अनुगमनं कुर्वन्ति इत्यर्थः।



**तात्पर्यार्थः -** सद्गुणैः अलङ्कृतस्य दुर्योधनस्य समृद्धः प्रभावः अत्र निरूपितः। संप्रति कोऽपि राजा दुर्योधनस्य प्रतिकुलं न आचरति। यतो तेन न कदापि कोपेन जनानां वशीकरणाय धनुः उत्थापितम्। कदापि न तस्य आनने क्रोधविकारः न दृष्टः। तथापि तस्य गुणगणैः वशीकृताः राजानः तस्य आज्ञां माल्यम् इव स्वमस्तके स्वीकुर्वन्ति।

**व्याकरणविमर्शः -**

- सज्यम् - ज्यया सहितं सज्यम् इति तृतीयातत्पुरुषः।
- कोपविजिह्मम् - कोपेन विजिह्मं कोपविजिह्मम्।
- गुणानुरागेण - गुणेषु अनुरागो गुणानुरागस्तेन गुणानुरागेण।
- नराधिपैः - नराणामधिपा नराधिपाः तैः नराधिपैः।
- उह्यते - वह-धातोः कर्मणि लटि रूपमिदम्।

**सन्धिकार्यम्-**

- शिरोभिरुह्यते = शिरोभिः + उह्यते।
- नराधिपैर्माल्यम् = नराधिपैः + माल्यम्।

**प्रयोगपरिवर्तनम् -**

स क्वचित् सज्यं धनुः नोद्यतवान् । वा कोपविजिह्मम् आननं न कृतवान् । नराधिपाः गुणानुरागेण अस्य शासनं माल्यमिव शिरोभिः वहन्तीति ।

**अलङ्कारालोचना -**

- श्लोके अस्मिन् माल्यमिव शासनम् इति द्वयोः साम्यप्रतिपादनात् उपमा अलङ्कारः।

**कोषः -**

- कोपः - "कोपक्रोधामर्षरोषप्रतिघा रुट् क्रुधौ स्त्रियौ"इत्यमरः।



## पाठगतप्रश्नाः-८

३६. दुर्योधनेन किं न क्वचिद् अपि उद्यतम्।

३७. तेन च आननं कीदृशं न कृतम्।

३८. नराधिपैः किं शिरोभिः उह्यते।

३९. तच्च किम् इव शिरोभिः उह्यते।

४०. नराधिपैः किमर्थं शासनं शिरोभिः उह्यते।



**स यौवराज्ये नवयौवनोद्धतं निधाय दुःशासनमिद्धशासनः।**
**मखेष्वखिन्नोऽनुमतः पुरोधसा धिनोति हव्येन हिरण्यरेतसम्।।२२**

**अन्वयः** - इद्धशासनः सः यौवराज्ये नवयौवनोद्धतं दुःशासनं निधाय मखेषु अखिन्नः पुरोधसा अनुमतः (सन्) हव्येन हिरण्यरेतसं धिनोति ।

**अन्वयार्थः** - इद्धशासनः इद्धं उग्रं शासनं यस्य स इद्धशासनः उग्रशासनः, सः दुर्योधनः, यौवराज्ये युवराजाधिकारे युवराजपदे, नवयौवनोद्धतं नवं नूतनं यत् यौवनं तारुण्यं तेन उद्धतं प्रगल्भितम् नवयौवनोद्धतं नूतनतारुण्यप्रगल्भम्, दुःशासनम् एतन्नामानम् स्वस्य अनुजम्, निधाय नियुज्य संस्थाप्य, मखेषु यज्ञेषु, अखिन्नः प्रसन्नः, पुरोधसा पुरोहितेन, अनुमतः अनुज्ञातः आदिष्टः (सन्) हव्येन हविषा, हिरण्यरेतसम् पावकम् अग्निम्, धिनोति जुहोति तर्पयति।

**सरलार्थः** - उग्रशासनः दुर्योधनः युवराजपदे स्वस्य कनिष्ठभ्रातरं दुःशासनं नियुक्तवान्। स्वयं च निश्चिन्तो भूत्वा पुरोहितानाम् आदेशानुसारं हविषा अग्निं प्रीणयति। एवं स दुर्योधनः यागादिषु कर्मसु प्रसन्नः सन् धर्मम् आचरति।

**तात्पर्यार्थः** - अस्मिन् श्लोके महाकविः भारविः दुर्योधनस्य धर्माचरणं निरूपयति। तथाहि सामादिना राज्यं सुदृढं कृत्वा देवसहायलाभाय यागादिना धर्मकर्मणा धर्मं समाचरति। तदर्थं च राजकार्यस्य परिचालनभारं स्वभ्रात्रे दुर्योधनाय प्रदत्तवान्। किञ्च, पुरोहितस्य आज्ञानुसारं यागादीनि अनुष्ठानानि आरभते।

**व्याकरणविमर्शः -**

- यौवराज्ये - युवा चासौ राजा चेति युवराजः इति कर्मधारयः, तस्य कर्म यौवराज्यम् इति तत्पुरुषसमासः, तस्मिन् यौवराज्ये ।
- नवयौवनोद्धतम् - नवं चासौ यौवनं चेति नवयौवनम् इति कर्मधारयः, नवयौवनेन उद्धतो नवयौवनोद्धतः इति तृतीयातत्पुरुषः, तं नवयौवनोद्धतम् ।
- इद्धशासनम् - इद्धं शासनं यस्य स इद्धशासनः इति बहुव्रीहिसमासः, तम् इद्धशासनम्।
- हिरण्यरेतसम् - हिरण्यं (सुवर्णं) रेतो यस्य स हिरण्यरेताः इति बहुव्रीहिसमासः, तं हिरण्यरेतसम्।
- निधाय – नि-धा-धातोः क्त्वोः ल्यपि रूपमिदम्।

**सन्धिकार्यम्-**

- मखेष्वखिन्नोऽनुमतः = मखेषु + अखिन्नः + अनुमतः।

**प्रयोगपरिवर्तनम् -**

तेन इद्धशासनेन यौवराज्ये नवयौवनोद्धतं दुःशासनं निधाय मखेषु अखिन्नेन पुरोधसाऽनुमतेन हव्येन हिरण्यरेताः धिन्व्यते ।

**कोषः -**

- हिरण्यरेतः - “हिरण्यरेतहुतभुग्दहनो हव्यवाहनः"इत्यमरः।





## पाठगतप्रश्नाः-९

४१. कीदृशः दुर्योधनः हिरण्यरेतसं धिनोति।

४२. स च कं कुत्र नियुक्तवान्।

४३. दुर्योधनः केन हिरण्यरेतसं धिनोति।

४४. कस्मिन् विषये अखिन्नः दुर्योधनः हिरण्यरेतसं धिनोति।

४५. स च केन अनुमतः हिरण्यरेतसं धिनोति।

---

**प्रलीनभूपालमपि स्थिरायति प्रशासदावारिधि मण्डलं भुवः।**
**स चिन्तयत्येव भियस्त्वदेष्यतीरहो दुरन्ता बलवद्विरोधिता।।२३**

**अन्वयः** - सः प्रलीनभूपालं स्थिरायति आवारिधि भुवः मण्डलम् प्रशासत् अपि त्वत् एष्यतीः भियः, चिन्तयति एव। अहो बलवद्विरोधिता दुरन्ता भवति।

**अन्वयार्थः** - सः दुर्योधनः, प्रलीनभूपालम् प्रलीनाः पराभूताः भूपालाः राजानः यस्मिन् तत् प्रलीनभूपालम् निःसपत्नम्, स्थिरायति चिरस्थायि सदा वर्त्तमानम्, आवारिधि आसमुद्रम् समुद्रपर्यन्तम्, भुवः पृथिव्याः, मण्डलम् खण्डम्, प्रशासत् शासनं कुर्वन् आज्ञापयन्, अपि, त्वत् भवतः युधिष्ठिरस्य सकाशात्, एष्यतीः आगामिनीः, भियः विपदः, चिन्तयति आलोचयति एव। अहो (सख्येदः) बलवद्विरोधिता महाजनवैरिता पराक्रमशीलैः सह शत्रुता, दुरन्ता दुरवसाना दुःखपरिणामा भवतीति शेषः ।। २३ ।।

**सरलार्थः** - सर्वान् भूपालान् पराजित्य शत्रुरहितं चिरस्थायि सम्पूर्णं भूमण्डलं स दुर्योधनः एकाकी एव शास्ति। किन्तु आत्मनः पराजयं शङ्कमानः स त्वत्तः बिभेति। तस्मात् सः सुखेन स्थातुं न शक्नोति। यतो हि बलबद्भिः सह विरोधः दुष्परिणामः भवति।

**तात्पर्यार्थः** - अस्मिन् श्लोके महाकविः भारविः वर्णयति यत् दुर्योधनः शत्रुरहितस्य भूमण्डलस्य अद्वितीयः शासकः इति सत्यम्। किन्तु तथापि सः स्वस्य पराजयं शङ्कमानः युधिष्ठिरात् बिभेति। यतो हि महद्भिः सह विरोधः सर्वदा समूलनाशाय एव भवति।

**व्याकरणविमर्शः -**

- प्रलीनभूपालम् - प्रलीना भूपाला यस्मिन् तत् प्रलीनभूपालम् इति बहुव्रीहिसमासः।
- स्थिरायति - स्थिरा आयतिः (उत्तरकालः) यस्य तत् स्थिरायति इति बहुव्रीहिसमासः।
- आवारिधि - आ वारिधिभ्य इति आवारिधि इति अव्ययीभावसमासः।
- बलवद्विरोधिता - बलमस्यास्तीति बलवान्, बलवद्भिः विरोधिता बलवद्विरोधिता इति तृतीयातत्पुरुषः।



- प्रशासत् - प्र-शास्-धातोः (लटः) शतरि रूपमिदम्।
- एष्यतीः - इण्-धातोः (लृटः) शतरि रूपमिदम्।

**सन्धिकार्यम्-**

- चिन्तयत्येव = चिन्तयति + एव।
- भियस्त्वदेष्यतीरहो = भियः + त्वदेष्यतीः + अहो।

**प्रयोगपरिवर्तनम् -**

तेन दुर्योधनेन प्रलीनभूपालं स्थिरायति, आवारिधि भुवो मण्डलं प्रशासता,त्वदेष्यत्यो भियः चिन्त्यन्ते एव । अहो वलवद्विरोधितया दुरन्तया भूयते।

**अलङ्कारालोचना -**

- अत्र चतुर्थपादेन पादत्रयगतस्य अर्थस्य समर्थनाद् अर्थान्तरन्यासः अलङ्कारः।

**कोषः -**

- भीः - "भीतिर्भीः साध्वसं भयम्"इत्यमरः।



## पाठगतप्रश्नाः १०

४६. स दुर्योधनः कीदृशं मण्डलं शास्ति।

४७. बलवद्विरोधिता कथं भवति।

४८. सः किं चिन्तयति एव।

४९. प्रलीनभूपालम् इत्यस्य कः अर्थः।

५०. आवारिधि इत्यस्य कः अर्थः।



## पाठसारः

शत्रूणां बलस्य आधिक्यात् राजा दुर्योधनः शङ्कितः अस्ति। अतः स्वकीये परकीये च राज्ये आत्मीयान् जनान् संरक्षकरूपेण संस्थाप्य विश्वस्ताकृतिं प्राप्नोति। मनसि भयम् अनुभवन् अपि आत्मानं भयरहितं प्रकटयति। कर्मणाम् अवसानेषु सेवकेभ्यः समर्पिताः सम्पत्तयः दुर्योधनस्य कृतज्ञतां च प्रकाशयन्ति। स राजा दुर्योधनः उपादेयवस्तुषु कर्त्तव्यानुसारं यथायोग्यं विभागं कृतवान्। ततश्च तेन समुचितरूपेण ते चत्वारः राजनीतेः उपायाः प्रयुक्ताः। ते च परस्परं स्पर्धाभावं सम्प्राप्य तस्य अर्थसम्पत्तीः स्थिरां कुर्वन्ति। अर्थात् समुचितरूपेण प्रयुक्ताः एते सर्वे उपायाः सर्वत्र तस्मै साफल्यं



समृद्धिं संयच्छन्ति। सप्तपर्णपुष्पस्य सुगन्ध इव सुगन्धयुतं राजभिः उपहारभूतानां गजानां मदजलं दुर्योधनस्य अङ्गणं पङ्किलतां प्रापयति। तत् च सभाभवनाङ्गणं बहूनां नृपाणां रथाश्वैः व्याप्तं वर्तते। एतेन राज्ञः दुर्योधनस्य प्रभुत्वस्य आतिशय्यं विशेषेण प्रकाशितो भवति। बहुदिनं यावत् दुर्योधनः प्रजासु कल्याणं वितरन् अस्ति। तस्मिन् कल्याणविधानकाले कृत्रिमाभिः नदीभिः पालिताः नदीनां जलम् आश्रित्य एव कुरवः देशाः जीवन्ति। हलादिभिः कर्षणं विना एव एते कुरुदेशाः सस्यानाम् उत्पादकाः। तस्मात् कृषकैः सस्यसम्पदः अल्पायासेन लब्धुं शक्याः। एवं सस्यसम्पत्तीः धारयन्तः कुरुदेशाः शोभन्ते। महाकीर्तिमान् दुर्योधनः दयान्वितः सन् प्रजानां सर्वथा रक्षणं करोति। तथा संरक्षणेन च प्रजानाम् उपद्रवरहितम् अभ्युदयं संपादयति। धनाधिपतेः कुवेरस्य इव अस्य दुर्योधनस्य दयादाक्षिण्यादिभिः गुणैः पृथिवी द्रवीभूता सञ्जाता। एवं वसुन्धरा द्रवीभूता सती स्वयम् एव धनानि प्रयच्छति। अर्थात् याचनां विना एव सुखेन वसूनि प्रददाति। महान्तः तेजस्विनः प्रभूतधनदानेन सम्मानिताः दुर्योधनस्य वीराः सैनिकाः युद्धे यशः प्राप्ताः। ते च धनुर्धराः स्वार्थसिद्ध्यर्थं न समागताः। किञ्च ते स्वस्वामिनः विरुद्धाः न सन्ति। अपि तु स्वामिनः प्रयोजनस्यैव साधकाः। तदर्थं च स्वेषां प्राणदानम् अपि कर्तुं ते अभिलषन्ति। सकलानि राजकार्याणि समाप्य स दुर्योधनः शुद्धचरितैः अवञ्चकैः गुप्तचरैः च सर्वेषां भूपतीनां व्यवहारान् गूढरूपेण जानाति। किन्तु यथा विधाता किं कर्तुम् इच्छति इति तस्य कार्यैः एव ज्ञायते। तद्वत् तस्यापि दुर्योधनस्य मनसि ईप्सितं कर्म तस्य हितकारकैः परिणामैः एव ज्ञायते। तेन राज्ञा दुर्योधनेन कुत्रापि आरोपितमौर्वीकं धनुः न उत्थापितम्। अथवा स्वकीयं मुखं कोपेन विकृतं न कृतम्। तथापि नृपतिभिः अस्य दुर्योधनस्य आदेशवचनं सादरं पुष्पमाला इव स्वीक्रियते। यथा गुणे सूत्रे संग्रथिता पुष्पमाला स्वमस्तके सादरं धार्यते। अर्थात् सर्वे राजानः प्रसन्नाः सन्तः तस्य शासनस्य अनुगमनं कुर्वन्ति इत्यर्थः। उग्रशासनः दुर्योधनः युवराजपदे स्वस्य कनिष्ठभ्रातरं दुःशासनं नियुक्तवान्। स्वयं च निश्चिन्तो भूत्वा पुरोहितानाम् आदेशानुसारं हविषा अग्निं प्रीणयति। एवं स दुर्योधनः यागादिषु कर्मसु प्रसन्नः सन् धर्मम् आचरति। सर्वान् भूपालान् पराजित्य शत्रुरहितं चिरस्थायि सम्पूर्णं भूमण्डलं स दुर्योधनः एकाकी एव शास्ति। किन्तु आत्मनः पराजयं शङ्कमानः स त्वत्तः बिभेति। तस्मात् सः सुखेन स्थातुं न शक्नोति। यतो हि बलबद्भिः सह विरोधः दुष्परिणामः भवति।

##  पाठान्तप्रश्नाः

१. शङ्कितः दुर्योधनः कथम् अशङ्किताकारम् उपैति।

२. तस्य सर्वे उपायाः सर्वत्र कथं तस्मै साफल्यं समृद्धिं च संयच्छन्ति।

३. तस्य आस्थाननिकेतनाजिरं भृशम् आर्द्रतां नयति एतेन कथम् अतिशयेन तस्य प्रभुत्वं प्रकटितं भवति।

४. दुर्योधनस्य प्रजारक्षणं कथम् आसीत्।

५. तस्य सैनिकाः कथम् आसीत् इति वर्ण्यताम्।

६. अदेवमातृकाः अपि कुरवः कथं सस्यसम्पत्तीः दधतः चकासति।



७. तस्य कार्यं कथं फलैः ज्ञायते स्म।

८. नराधिपाः तेन प्रभाविताः आसन् इति दृष्टान्तः वर्ण्यताम्।

९. दुर्योधनः किं किं कृत्वा धर्माचरणं करोति।

१०. बलवद्विरोधिता कथं दुरन्ता भवति।

११. समानार्थकानि धातुरूपाणि मेलयत।

| **क-स्तम्भः** | **ख-स्तम्भः** |
|---|---|
| १. धिनोति | क. धार्यते। |
| २. प्रतीयते | ख. जुहोति। |
| ३. उपैति | ग प्राप्नोति। |
| ४. फलन्ति | घ प्रदोग्धि। |
| ५. चकासति | ङ. अभिलषति। |
| ६. प्रदुग्धे | च. प्रसुवते। |
| ७.वाञ्छति | छ. विराजन्ते। |
| ८. उह्यते | ज. ज्ञायते। |

उत्तराणि - १-ख, २-ज, ३-ग, ४-च, ५-छ, ६-घ, ७-ङ, ८- क।



## किमधिगतम्

१) दुर्योधनः कथं भीतः आसीत् इति अस्मात् पाठात् ज्ञायते।

२) राजा दुर्योधनः सारल्येन जेतुम् अशक्यः आसीत् इत्यपि ज्ञायते।

३) राजसु तस्य प्रभावः कथम् आसीत् इति स्पष्टं भवति।

४) वीराः सैनिकाः प्रकृत्या कथं प्रभुकार्ये निरताः भवन्ति इति स्पष्टम्।

५) बलवद्भिः सह विरोधिता दुरन्ता भवति इति ज्ञातम्।

६) समासः तस्य विग्रहश्च कथं भवतीति बुध्यते अस्मात् पाठात्।



## पाठगतप्रश्नानामुत्तराणि

**उत्तराणि-१**

१. दुर्योधनः।



२. शङ्कितः सन्।

३. परितः परेतरान् रक्षान् विधाय।

४. क्रियापवर्गेषु अनुजीविसात्कृताः सम्पदः।

५. कार्यावसानेषु।

**उत्तराणि-२**

६. दुर्योधनेन, पदेषु।

७. सम्यक् विभज्य।

८. अनारतम्, परिबृंहितायतीः अर्थसम्पदः।

९. सङ्घर्षम् उपेत्य इव।

१०. स्थिराः।

**उत्तराणि-३**

११. आस्थाननिकेतनाजिरम्।

१२. भृशम्।

१३. अनेकराजन्यरथाश्वसंकुलम्।

१४. अयुग्मच्छदगन्धिः नृपोपायनदन्तिनां मदः।

१५. सप्तपर्णपुष्पस्य गन्ध इव गन्धः यस्य असौ।

**उत्तराणि-४**

१६. सस्यसम्पदः।

१७. कृषिवलैः।

१८. अकृष्टपच्याः इव।

१९. चिराय क्षेमं वितन्वति दुर्योधने।

२०. नदीजलजीविनः।

**उत्तराणि-५**

२१. वसूनि प्रदुग्धे।

२२. अस्य दुर्योधनस्य गुणैः उपस्नुता।

२३. वसुना।

२४. प्रशान्तबाधम्।

२५. उदारकीर्तिः दयावान्।

**उत्तराणि-६**

२६. महौजसः मानधनाः धनार्चिताः।

२७. संयति।

२८. प्रियाणि समीहितुम्।

२९. असुभिः।

३०. न संहताः न भिन्नवृत्तयः।

**उत्तराणि-७**

३१. महीभृताम्।

३२. सच्चरितैः चरैः।

३३. अशेषितक्रियः।

३४. तस्य फलैः।

३५. हितानुबन्धिभिः महोदयैः।

**उत्तराणि-८**

३६. सज्यं धनुः।

३७. कोपविजिह्मम्।

३८. दुर्योधनस्य शासनम्।

३९. माल्यम् इव।

४०. गुणानुरागेण।



**उत्तराणि-९**

४१. इद्धशासनः।

४२. यौवराज्ये, नवयौवनोद्धतम् दुःशासनम्।

४३. हव्येन।

४४. मखेषु।

४५. पुरोधसा।

**उत्तराणि-१०**

४६. प्रलीनभूपालं स्थिरायति आवारिधि भुवः मण्डलम्।

४७. दुरन्ता।

४८. त्वत् एष्यतीः भियः।

४९. निःसपत्नम्।

५०. समुद्रपर्यन्तम्।

॥ इति एकविंशः पाठः ॥



# २२

# युधिष्ठिरस्य प्रबोधः

## प्रस्तावना

विषदूरीकरणमन्त्रस्य श्रवणेन विषधरः सर्पः विषं त्यक्त्वा नताननः भवति तथैव सभायां यदि कथाप्रसङ्गेन कस्यापि मुखात् युधिष्ठिरस्य कीर्तिं शृणोति स्म, तदैव दुर्योधनः अर्जुनस्य पराक्रमं स्मृत्वा हतदर्पो भवति स्म। एवं सर्वथा युधिष्ठिरं जेतुम् असमर्थः दुर्योधनः युधिष्ठिरे कपटं कर्तुं प्रवृत्तः आसीत्। ततश्च युधिष्ठिरस्य मुखात् चरेण ज्ञापितां समग्रां कथां श्रुत्वा द्रौपदी किम् अनुभूतवती किञ्च युधिष्ठिरस्य क्रोधं तथा उत्साहं वर्धयितुं किं किमपि उक्तवती इत्यादिकं सर्वं पाठेऽस्मिन् पठिष्यन्ति भवन्तः। शास्त्रज्ञेषु व्यवहारज्ञेषु च स्त्रीजनैः उक्तं किमपि वचनम् तिरस्कार इव भवति इति जानन्ती अपि द्रौपदी कथं युधिष्ठिरं प्रति किमपि कथयितुं प्रवृत्ता अभूत्, किञ्च तेन दुर्योधनेन वस्तुतः कः महान् दोषः कृतः इति ज्ञास्यन्ति पाठात् अस्मात्। मायाविषु सरलता न समुचिता इति द्रौपद्याः वचनस्य तात्पर्यं किम् आसीदिति विषये भवतां साधु बोधः भविष्यति।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- पद्यकाव्यस्य निर्माणं कथं करणीयम् इति ज्ञास्यति।
- श्लोकानाम् अन्वयः कथं कर्त्तव्यम् इत्यस्मिन् विषये शिक्षां प्रप्स्यति।
- द्रौपदी किमर्थम् उपदेष्टुं प्रवृत्ता इति स्पष्टं भविष्यति।
- चराणां वचने कः सारः भवतीति अज्ञानं दूरीभविष्यति।
- कैः साकं कथम् आचरणीयम् इति ज्ञानं प्राप्स्यति।

## २२.१) मूलपाठः

**कथाप्रसङ्गेन जनैरुदाहृतादनुस्मृताखण्डलसूनुविक्रमः ।**
**तवाभिधानाद् व्यथते नताननः स दुःसहान्मन्त्रपदादिवोरगः ।। १.२४ ।।**

**तदाशु कर्तुं त्वयि जिह्ममुद्यते विधीयतां तत्र विधेयमुत्तरम् ।**
**परप्रणीतानि वचांसि चिन्वतां प्रवृत्तिसाराः खलु मादृशां धियः ।। १.२५ ।।**



इतीरयित्वा गिरमात्तसत्क्रिये गतेऽथ पत्यौ वनसंनिवासिनाम् ।
प्रविश्य कृष्णासदनं महीभुजा तदाचचक्षेऽनुजसन्निधौ वचः ।। १.२६ ।।

निशम्य सिद्धिं द्विषतामपाकृतीस्ततस्ततस्त्या विनिगन्तुमक्षमा ।
नृपस्य मन्युव्यवसायदीपिनीरुदाजहार द्रुपदात्मजा गिरः ।। १.२७ ।।

भवादृशेषु प्रमदाजनोदितं भवत्यधिक्षेप इवानुशासनम् ।
तथापि वक्तुं व्यवसाययन्ति मां निरस्तनारीसमया दुराधयः ।। १.२८ ।।

अखण्डमाखण्डलतुल्यधामभिश्चिरं धृता भूपतिभिः स्ववंशजैः ।
त्वया स्वहस्तेन मही मदच्युता मतङ्गजेन स्रगिवापवर्जिता ।। १.२९ ।।

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः ।। १.३० ।।

## २२.२) साम्प्रतम् मूलपाठम् अवगच्छाम

**कथाप्रसङ्गेन जनैरुदाहृतादनुस्मृताखण्डलसूनुविक्रमः।**
**तवाभिधानाद् व्यथते नताननः सुदु सहान्मन्त्रपदादिवोरगः।।२४**

**अन्वयः** - कथाप्रसङ्गेन जनैः उदाहृतात् तव अभिधानात् अनुस्मृताखण्डलसूनुविक्रमः नताननः सः (दुर्योधनः) सुदुःसहात् मन्त्रपदात् उरगः इव व्यथते।

**अन्वयार्थः** - कथाप्रसङ्गेन कथाप्रसङ्गेषु इनाः श्रेष्ठाः कथाप्रसङ्गेनाः जनाः तैः कथाप्रसङ्गेनजनैः विषवैद्यप्रवरलोकैः, अथवा कथायाः प्रसङ्गः कथाप्रसङ्गः तेन कथाप्रसङ्गेन वार्तानुक्रमेण जनैः लोकैः, उदाहृतात् उच्चारितात्, तव भवतः (युधिष्ठिरादेः), अभिधानात् नाम्नः, (अन्यपक्षे) तवाभिधानात् तश्च वश्च तवौ तार्क्षवासुकी तवयोः अभिधानं यस्मिन् तत् तवाभिधानं तस्मात् तार्क्ष्यवासुकिनामकथनात्, अनुस्मृताखण्डलसूनुविक्रमः आखण्डलस्य इन्द्रस्य सूनुः पुत्रः आखण्डलसूनुः, तस्य विक्रमः आखण्डलसूनुविक्रमः, अनुस्मृतः आखण्डलसूनुविक्रमः येन सः अनुस्मृताखण्डलसूनुविक्रमः स्मृतार्जुनपराक्रमः, (अन्यपक्षे) अनुस्मृताखण्डलसूनुविक्रमः आखण्डलस्य इन्द्रस्य सूनोः अनुजस्य नारायणस्य विः पक्षी गरुडः, तस्य क्रमः पादविक्षेपः अनुस्मृतः चिन्तितः येन सः अनुस्मृताखण्डलसूनुविक्रमः स्मृतगरुडवेगः, नताननः नम्रमुखः, सः सिंहासनारूढः, दुर्योधनः सुदुःसहात् अतिदुःश्रवात्, मन्त्रपदात् विषदूरीकरणवाक्यविशेषात्, उरगः सर्पः, इव, व्यथते दुःखायते।



**सरलार्थः** - सभायां यदि कथाप्रसङ्गेन कस्यापि मुखात् युधिष्ठिरस्य कीर्तिं शृणोति, तदा दुर्योधनः भवतां विशेषस्य अर्जुनस्य पराक्रमं स्मृत्वा हतदर्पो भवति। यथा विषदूरीकरणमन्त्रस्य श्रवणेन विषधरः सर्पः विषं त्यक्त्वा नताननः भवति।

**तात्पर्यार्थः** - अस्मिन् श्लोके दुर्योधनस्य भीतिः निरूपिता महाकविना भारविना। विषवैद्यैः पठितं गरुडवासुकिनामयुक्तं मन्त्रम् श्रुत्वा सर्पः गरुडस्य प्रभावं मनसि चिन्तयित्वा नताननः तिष्ठति। एवं सभायां कथाप्रसङ्गेन केनापि उच्चारितं युधिष्ठिरस्य नाम श्रुत्वा भयेन व्याकुलो भवति। किञ्च अर्जुनस्य विक्रमं स्मृत्वा हतवीर्यः सः अधोवदनो भवति। "सर्वतो जयम् अन्विच्छेत् पुत्रात् इच्छेत् पराजयम्" इति न्यायात् अर्जुनस्य उत्कर्षकथनं युधिष्ठिरस्य भूषणम् एव।

**व्याकरणविमर्शः -**

- अनुस्मृताखण्डलसूबुविक्रमः - आखण्डलस्य सूनुः आखण्डलसूनुः, आखण्डलसूनोः विक्रमः आखण्डलसूनुविक्रमः, अनुस्मृतः आखण्डलसूनुविक्रमो येन सः अनुस्मृताखण्डलसूबुविक्रमः।
- तवाभिधानात्- तश्च वश्च तवौ तार्क्ष्यवासुकी तयोः अभिधानमिति तवाभिधानम्, तस्मात् तवाभिधानात्।
- नताननः - नतम् आननं यस्य स नताननः।
- व्यथते - व्यथ-धातोः लटि प्रथमपुरुषैकवचने रूपमिदम्।

**सन्धिकार्यम्-**

- मन्त्रपदादिवोरगः= मन्त्रपदात् + इव + उरगः।
- जनैरुदाहृतादनुस्मृताखण्डलसूनुविक्रमः = जनैः + उदाहृतात् + अनुस्मृताखण्डलसूनुविक्रमः।

**प्रयोगपरिवर्तनम् -**

- कथाप्रसङ्गेन जनैः उदाहृताद्, अनुस्मृताखण्डलसूनुविक्रमेण नताननेन तेन सुदुःसहात् मन्त्रपदाद् उरगेण इव तव अभिधानाद् व्यथ्यते।

**अलङ्कारालोचना** -

अत्र श्लोके उपमा अलङ्कारः उरग इव सः इति साम्यप्रतिपादनात्।

**कोषः** -

- अभिधानम् - "आख्याह्वे अभिधानं च नामधेयं च नाम च"इत्यमरः।





## पाठगतप्रश्नाः-१

१. स दुर्योधनः किम् इव व्यथते।

२. दुर्योधनः कस्मात् व्यथते।

३. स च दुर्योधनः कीदृशः सन् व्यथते।

४. उरगः कस्मात् व्यथते।

५. तवाभिधानात् इत्यस्य किम् अर्थद्वयं सम्भवति।

---

**तदाशु कर्तुं त्वयि जिह्ममुद्यते विधीयतां तत्र विधेयमुत्तरम्।**
**परप्रणीतानि वचांसि चिन्वतां प्रवृत्तिसाराः खलु मादृशां गिरः।।२५**

**अन्वयः** -तत् त्वयि जिह्मं कर्त्तुम् उद्यते तत्र विधेयम् उत्तरम् आशु विधीयताम्। परप्रणीतानि वचांसि चिन्वतां मादृशां गिरः प्रवृत्तिसाराः खलु।

**अन्वयार्थः** - तत् तस्मात् कारणात्, त्वयि भवति युधिष्ठिरे, जिह्मं कपटम्, कर्तुं विधातुम्, उद्यते प्रवृत्ते, तत्र तस्मिन् दुर्योधने, विधेयं कर्तव्यम्, उत्तरं प्रतीकारः उपायः, आशु शीघ्रम्, विधीयताम् क्रियताम्। परप्रणीतानि परेण अन्येन प्रणीतानि उक्तानि परप्रणीतानि अन्योक्तानि, वचांसि वाक्यानि, चिन्वतां गवेषयताम्। मादृशाम् वनेचराणाम्, गिरः वाचः, प्रवृत्तिसाराः खलु वृत्तान्तमात्रप्रधानाः एव।

**सरलार्थः** - तस्मात् कारणात् भवति युधिष्ठिरे स दुर्योधनः कपटं कर्तुं प्रवृत्तः। अर्थात् त्वां निहन्तुम् इच्छति इत्यर्थः। अतः भवता करणीयः उपायः शीघ्रं क्रियताम्। यतः परोक्तानि वचनानि अन्वेषयतां दूतानाम् अस्माकं वचनानि वृत्तान्तप्रधानानि भवन्ति। अर्थात् मादृशाः अल्पबुद्धयः दूताः केवलं वार्ताभिज्ञाः न तु कार्याभिज्ञाः। अतः भवान् एव विचार्य समुचितं कर्म सम्पादयतु।

**तात्पर्यार्थः** - अस्मिन् श्लोके किरातः स्वसंदेशस्य सारांशं कथयति। यत् दुर्योधनः सर्वदा भवतः छिद्रान्वेषी भवन्तं जेतुम् इच्छति। अतः भवान् यथा तस्य पराजयः स्यात् तथा विचारयतु। कथं तस्य पराजयः स्याद् इति अहं तु वक्तुं समर्थो नास्मि। तद्यथा यथार्थकथनम् एव दूतानां प्रयोजनम्। तत्र विधेयं तु स्वामिनां कर्त्तव्यम् इति। अर्थात् यदत्र समयोचितं कृत्यं तत् भवता शीघ्रम् एव कर्त्तव्यम्।

**व्याकरणविमर्शः -**

- परप्रणीतानि - परैः प्रणीतानि इति परप्रणीतानि ।
- प्रवृत्तिसाराः - प्रवृत्तिरेव सारो यासां ताः प्रवृत्तिसाराः।
- विधीयताम् - वि-धा-धातोः यकि लोटि तिपि रूपमिदम्।

**सन्धिकार्यम्-**

- तदाशु = तत् + आशु।



**प्रयोगपरिवर्तनम् -**

तत् त्वयि जिह्मं कर्तुम् उद्यते तत्र विधेयम् उत्तरं विधेहि । परप्रणीतानि वचांसि चिन्वतां मादृशां गीर्भिः प्रवृत्तिसारभिः भूयते खलु।

**कोषः -**

- प्रवृत्तिः - "वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्याद्" इत्यमरः।



## पाठगतप्रश्नाः-२

६. दुर्योधनः किं कर्तुम् उद्यतः।

७. युधिष्ठिरेण दुर्योधने आशु किं विधीयताम्।

८. युधिष्ठिरः किं चिन्वताम्।

९. वनेचराणां गिरः कीदृशाः भवन्ति।

१०. जिह्मम् इत्यस्य कः अर्थः।

---

**इतीरयित्वा गिरमात्तसत्क्रिये गतेऽथ पत्यौ वनसन्निवासिनाम्।**
**प्रविश्य कृष्णा-सदनं महीभुजा तदाचचक्षेऽनुजसन्निधौ वचः।।२६**

**अन्वयः** - अथ इति गिरम् ईरयित्वा गते आत्तसत्क्रिये वनसन्निवासिनां पत्यौ (सति) महीभुजा कृष्णासदनं प्रविश्य अनुजसन्निधौ तद् वचः आचचक्षे।

**अन्वयार्थः** - अथ ततः तदनन्तरम्, इति इत्थं एवं रूपेण, गिरं वाचं वाणीम्, ईरयित्वा उक्त्वा, गते स्थानं प्रस्थिते, (तथा च) आत्तसत्क्रिये गृहीतपारितोषिके,वनसन्निवासिनाम् वनवासिनां वनेचराणाम्, पत्यौ स्वामिनि, सति (तदा) महीभुजा भूपतिना युधिष्ठिरेण, कृष्णासदनं द्रौपदीभवनम्, प्रविश्य अन्तर्गत्वा, अनुजसन्निधौ अनुजस्य भीमस्य सन्निधिः अनुजसन्निधिः तस्मिन् अनुजसन्निधौ भीमसमीपे, तत् वनेचरेण उक्तम्, वचः वाक्यम्, आचचक्षे उक्तम्। अथवा महीभुजा भूपतिना युधिष्ठिरेण, सदनं भवनम्, प्रविश्य अन्तर्गत्वा, अनुजस्य भीमस्य सन्निधिः अनुजसन्निधिः तस्मिन् अनुजसन्निधौ भीमसमीपे, तत् वनेचरेण उक्तम्, वचः वाक्यम्, कृष्णा द्रौपदी, आचचक्षे कथिता।

**सरलार्थः** - इत्थं वचनं युधिष्ठिराय निवेद्य सः वनेचरः पारितोषिकं च गृहीत्वा स्वगृहं प्रस्थितः। तदनन्तरं राजा युधिष्ठिरः द्रौपद्याः भवनं प्रविश्य भीमार्जुनादीनां स्वभ्रातृणां समीपे वनेचरेण उक्तं वचनम् आख्यातवान्। अथवा राजा दुर्योधनः भवनं प्रविश्य स्वभ्रातृणां पुरतः वनेचरेण उक्तं वचनम् आख्यातवान्।

**तात्पर्यार्थः -** दुर्योधनस्य सकलं वृत्तान्तं युधिष्ठिराय निवेद्य वनेचरः स्वकार्यं सम्पादितवान्। ततः युधिष्ठिरात् वनेचरःपारितोषिकं च प्राप्य स्वगृहं गतः। तदा युधिष्ठिरः अपि वनेचरेण प्रतिपादितं समाचारं भीमसमीपे स्थितां द्रौपदीं कथयितुं द्रौपद्याः भवनं गतः।

**व्याकरणविमर्शः -**

- आत्तसत्क्रिये - आत्ता (गृहीता) सत्क्रिया येन स आत्तसत्क्रियः तस्मिन् आत्तसत्क्रिये ।
- वनसन्निवासिनाम् - वने सन्निवसन्ति ये ते वनसन्निवासिनः, तेषां वनसन्निवासिनाम्।
- कृष्णासदनम्-कृष्णाया द्रौपद्याः सदनं कृष्णासदनम् ।
- ईरयित्वा - ईर-धातोः णिचि क्त्वा-प्रत्यये रूपमिदम्।
- आचचक्षे - आङ्-चक्षिङ्-धातोः लिटि रूपमिदम्।

**सन्धिकार्यम्-**

- गतेऽथ = गते + अथ।
- इतीरयित्वा = इति + ईरयित्वा।

**प्रयोगपरिवर्तनम् -**

- इति ईरयित्वा आत्तसत्क्रिये वनसन्निवासिनां पत्यौ गते महीभुक् कृष्णासदनं प्रविश्य, वा सदनं प्रविश्य अनुजसन्निधौ कृष्णां प्रति आचचक्षे।

**कोषः -**

- वनम्- "अटव्यरण्यं विपिनं गहनं काननं वनम्"इत्यमरः।



## पाठगतप्रश्नाः-३

११. महीभुजा अनुजसन्निधौ किं कृतम्।

१२. तेन च कुत्र प्रविश्य एवं कृतम्।

१३. कस्मिन् गते तेन युधिष्ठिरेण वचः आचचक्षे।

१४. स च वनेचरः किं कृत्वा गतवान्।

१५. आत्तसत्क्रिये इत्यस्य कः अर्थः।

---

**निशम्य सिद्धिं द्विषतामपाकृतीस्ततस्ततस्त्या विनिगन्तुमक्षमा।**
**नृपस्य मन्युव्यवसायदीपिनीरुदाजहार द्रुपदात्मजा गिरः।।२७**

**अन्वयः -** ततः द्रुपदात्मजा द्विषतां सिद्धिं निशम्य ततस्त्याः अपाकृतीः विनिगन्तुम् अक्षमा, (सती) नृपस्य मन्युव्यवसायदीपिनीः गिरः उदाजहार।



**अन्वयार्थः** - ततः तदनन्तरं युधिष्ठिरकथनानन्तरम्, द्रुपदात्मजा द्रुपदपुत्री द्रौपदी, द्विषतां शत्रुणां दुर्योधनप्रभृतीनाम्, सिद्धिम् समृद्धिम् उत्कर्षम्, निशम्य श्रुत्वा, ततस्त्याः ततः शत्रुभ्यः आगताः, अपाकृतीः अपकारान्. विनियन्तुं निरोद्धुम् अपनेतुम्, अक्षमा असमर्था सती, नृपस्य राज्ञः युधिष्ठिरस्य, मन्युव्यवसायदीपिनीः मन्युः क्रोधः व्यवसायः उद्यमः तयोः दीपिनीः समुत्पादिकाः मन्युव्यवसायदीपिनीः क्रोधोद्यमसंवर्धिनीः, गिरः वचनानि, उदाजहार उक्तवती।

**सरलार्थः** - युधिष्ठिरस्य कथनानन्तरं शत्रूणां कौरवाणां समृद्धिं युधिष्ठिरस्य मुखाद् एव श्रुतवती। ततः शत्रूणां कौरवाणां कारणात् प्राप्तं दुःखं किञ्च दुःखाद् अपि उत्पन्नं मानसिकविकारं निरोद्धुं असमर्था सत्यपि युधिष्ठिरस्य क्रोधं तथा उत्साहं वर्धयितुं वचनानि उक्तवती।

**तात्पर्यार्थः** - अस्मिन् श्लोके महाकविः भारविः द्रौपदीमुखेन युधिष्ठिरस्य यथा क्रोधोद्दीपनं भवेत् तथा वचनानि कथयति। तथाहि युधिष्ठिरस्य मुखात् शत्रोः दुर्योधनस्य समृद्धिं श्रुतवती। तच्छ्रवणेन च क्षुब्धहृदया सा द्रौपदी दुर्योधनेन कृतान् अपकारान् स्मरन्ती युधिष्ठिरं प्रति एवंभूतां वाचम् उक्तवती। यथा तस्य युधिष्ठिरस्य क्रोधः वर्धेत अपि च दुर्योधनस्य उन्मूलनाय प्रयतेत।

**व्याकरणविमर्शः -**

- द्रुपदात्मजा - द्रुपदस्य आत्मजा द्रुपदात्मजा।
- मन्युव्यवसायदीपिनीः - मन्युश्च व्यवसायश्च मन्युव्यवसायौ, तौ दीपयन्ती इति मन्युव्यवसायदीपिन्यः, ताः मन्युव्यवसायदीपिनीः।
- निशम्य – नि-शम्-धातोः क्त्वोः ल्यपि रूपमिदम्।
- उदाजहार – उत्- आ-हृ-धातोः लिटि प्रथमपुरुषैकवचने रूपमिदम्।

**सन्धिकार्यम्-**

- अपाकृतीस्ततस्ततस्त्याः = अपाकृतीः + ततः + ततस्त्याः।
- मन्युव्यवसायदीपिनीरुदाजहार =मन्युव्यवसायदीपिनीः + उदाजहार।

**प्रयोगपरिवर्तनम् -**

द्विषतां सिद्धिं निशम्य, ततः ततस्त्या अपाकृतीः विनियन्तुम् अक्षमया द्रौपद्या नृपस्य मन्युव्यवसायदीपिनीः गिरः उदाजह्रिरे।

**अलङ्कारालोचना -**

- अत्र व्यञ्जनस्य तकारस्य असकृत् उच्चारणात् वृत्त्यनुप्रासः अलङ्कारः।

**कोषः -**

- गीः - "ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती"इत्यमरः।



## पाठगतप्रश्नाः-४



१६. का गिरः उदाजहार।

१७. सा च कदा गिरः उदाजहार।

१८. सा किं निशम्य एवं कृतवती।

१९. सा कीदृश्यः गिरः उदाजहार।

२०. सा द्रौपदी किं कर्तुम् अक्षमा।

---

**भवादृशेषु प्रमदाजनोदितं भवत्यधिक्षेप इवानुशासनम्।**
**तथापि वक्तुं व्यवसाययन्ति मां निरस्तनारीसमया दुराधयः।।२८**

**अन्वयः** - (यद्यपि) भवादृशेषु प्रमदाजनोदितम् अनुशासनम् अधिक्षेपः इव भवति। तथाऽपि निरस्तनारीसमयाः दुराधयः मां वक्तुं व्यवसाययन्ति ।

**अन्वयार्थः** - भवादृशेषु भवद्विधेषु सर्वज्ञेषु, प्रमदाजनोदितम् प्रमदाः स्त्रियः एव जनाः प्रमदाजनाः, तैः उदितं कथितम् प्रमदाजनोदितम् स्त्रीजनकथितम्, अनुशासनम् सदुपदेशवचनम्, अधिक्षेपः आक्षेपः तिरष्कारः इति वा, इव तद्वत्, भवति स्यात् । तथापि दुर्वचत्वेऽपि, निरस्तनारीसमया निरस्ताः निराकृताः नारीणां समयाः आचाराः निरस्तनारीसमयाःनिराकृतस्त्रीशीलाः, दुराधयः दुः दुष्टाः आधयः मनोव्यथाः दुष्टमनोव्यथाः, मां द्रौपदीम्,वक्तुम् कथयितुम्, व्यवसाययन्ति प्रेरयन्ति।

**सरलार्थः** - भवादृशेषु शास्त्रज्ञेषु व्यवहारज्ञेषु च स्त्रीजनैः उक्तं किमपि वचनम् भवतः तिरस्कार इव भवति। तथापि शत्रुकृतैः अवमाननाभिः मनोव्यथाभिः च अहं द्रौपदी अत्यन्तं क्षुब्धहृदया अस्मि। अत एव स्त्रीजनोचितं धैर्यविनयादिकम् आचारं विहाय भवते किञ्चित् कथयामि।

**तात्पर्यार्थः** - प्रस्तुते अस्मिन् श्लोके द्रौपद्याः हृदये प्रज्वलितस्य भयंकरस्य प्रतिशोधस्य या भावना उत्पन्ना तस्याः प्रतिध्वनिः प्राप्तः। पण्डितान् प्रति उपदेशवचनम् अपमानं प्रदर्शयति, तत् पुनः स्त्रीजनानाम् अनौचित्यम् एव। शत्रुभिः कौरवैः जनितेन दुःखेन अभिभूता द्रौपदी सन्तप्ता। किञ्च, ताः दुष्टाः मनोव्यथाः युधिष्ठिरं प्रति सर्वं कथयितुं तां द्रौपदीं प्रेरयन्ति।

**व्याकरणविमर्शः -**

- भवादृशेषु - भवन्त इव दृश्यन्ते इति भवादृशाः, तेषु भवादृशेषु ।
- प्रमदाजनोदितम् - प्रमदा एव जनः प्रमदाजनः, तेन उदितं प्रमदाजनोदितम् इति तृतीयातत्पुरुषः।
- निरस्तनारीसमयाः - नार्यः समयाः नारीसमयाः इति षष्ठीतत्पुरुषः। निरस्ताः नारीसमयाः यैः, ते निरस्तनारीसमयाः इति बहुव्रीहिसमासः।
- अनुशासनम् - अनु-शास्-धातोः ल्युट्-प्रत्यये रूपमिदम्।



- व्यवसायन्ति - वि-अव-षो-धातोः णिचि लटि प्रथमपुरुषबहुवचने रूपमिदम्।

**सन्धिकार्यम्-**

- भवत्यधिक्षेपः = भवति + अधिक्षेपः।
- इवानुशासनम् = इव + अनुशासनम्।

**प्रयोगपरिवर्तनम् -**

भवादृशेषु प्रमदाजनोदितेन अनुशासनेन अधिक्षेपेण इव भूयते । तथाऽपि निरस्तनारीसमयैः दुराधिभिः अहं वक्तुं व्यवसाय्ये।

**अलङ्कारालोचना -**

- अत्र अनुशासनम् अधिक्षेप इव इति साम्यप्रतिपादनात् उपमा अलङ्कारः।

**कोषः -**

- आधिः - "पुंस्याधिर्मानसी व्यथा"इत्यमरः।



## पाठगतप्रश्नाः-५

२१. भवादृशेषु किम् अधिक्षेपः इव भवति।

२२. के व्यवसाययन्ति।

२३. ते च दुराधयः कां किमर्थं व्यवसाययन्ति।

२४. प्रमदाजनोदितम् अनुशासनम् कुत्र अधिक्षेप इव भवति।

२५. अधिक्षेपः इत्यस्य कः अर्थः।

---

**अखण्डमाखण्डलतुल्यधामभिश्चिरं धृता भूपतिभिः स्ववंशजैः।**
**त्वयात्महस्तेन मही मदच्युता मतङ्गजेन स्रगिवाऽपवर्जिता।।२९**

**अन्वयः** - आखण्डलतुल्यधामभिः स्ववंशजैः भूपतिभिः चिरम् अखण्डं धृता मही मदच्युता मतङ्गजेन, स्रक् इव त्वया आत्महस्तेन अपवर्जिता।

**अन्वयार्थः** - आखण्डलतुल्यधामभिः आखण्डलस्य इन्द्रस्य तुल्यं समानं धाम तेजः येषां तैः आखण्डलतुल्यधामभिः इन्द्रसमतेजोभिः, स्ववंशजैः निजपूर्वजैः, निजकुलजैः वा । भूपतिभिः भूपैः भरतादिभिः इत्यर्थः । चिरं दीर्घकालम्, अखण्डम् सम्पूर्णम्, यथा स्यात्तथेति क्रियाविशेषणम् । धृता धारिता, मही पृथिवी, मदच्युता मदं दानजलं क्षरति इति मदच्युत् तेन मदच्युता मदस्राविणा, मतङ्गजेन मातङ्गेन, मत्तेन हस्तिनेति भावः । स्रक् माल्यम्, इव, त्वया युधिष्ठिरेण, आत्महस्तेन स्वकरेण; (द्यूतविधाविधौ) अपवर्जिता त्यक्ता।



**सरलार्थः** - इन्द्रसदृशपराक्रमाः भवतः वंशजाः दीर्घकालं यावत् सम्पूर्णा भूमिरियं वशीकृता आसीत्। किन्तु सा भवतः हस्तेनैव विनाशिता। यथा मदमत्तः हस्ती स्वकण्ठात् माल्यम् दूरीकरोति।

**तात्पर्यार्थः** - अस्मिन् श्लोके द्रौपदीमुखेन कविः कथयति यत् स्वेषां चापल्येन एव तैः धरा इयं विनाशिता। अतः विपत्तिः सा न हि दैवीकृता इति तस्याः कथनस्य अभिप्रायः। इन्द्रसमप्रभावैः स्ववंशजैः भरतादिभिः चिरकालं पृथिवी इयं धृता आसीत्। किन्तु सा पृथिवी इदानीं युधिष्ठिरेण स्वकीयकरेण परित्यक्ता। मदजलस्राविणा प्रमत्तेन गजेन यथा पुष्पमाल्यम् परित्यक्तं भवति।

**व्याकरणविमर्शः -**

- आखण्डलतुल्यधामभिः - आखण्डलेन तुल्यं धाम येषां ते आखण्डलतुल्यधामानः इति बहुव्रीहिसमासः, तैः आखण्डलतुल्यधामभिः।
- स्ववंशजैः - स्वस्य वंशः स्ववंशः, स्ववंशाज्जायन्ते इति स्ववंशजाः, तैः स्ववंशजैः।
- धृता - धृ-धातोः क्त-प्रत्यये स्त्रियां रूपमिदम्।
- अपवर्जिता - अप-वृज्-धातोः क्त-प्रत्यये स्त्रियां रूपमिदम्।

**सन्धिकार्यम्-**

- आखण्डलतुल्यधामभिश्चिरम् = आखण्डलतुल्यधामभिः + चिरम्।
- स्रगिव = स्रक् + इव।

**प्रयोगपरिवर्तनम् -**

- आखण्डलतुल्यधामभिः स्ववंशजैः चिरम् अखण्डं धृत्वा महीं मदच्युतः मतङ्गजस्य स्रक् इव त्वम् आत्महस्तेन अपवर्जितवान्।

**अलङ्कारालोचना -**

- अत्र मतङ्गजेन इव त्वया स्रगिव अपवर्जिता इति साम्यप्रतिपादनात् पूर्णोपमा अलङ्कारः।

**कोषः -**

- मतङ्गजः - "मतङ्गजो गजो नागः कुञ्जरो वारणः करी"इत्यमरः।



## पाठगतप्रश्नाः-६

२६. कैः मही चिरम् अखण्डं धृता।

२७. ते च कीदृशाः।

२८. सा मही केन अपवर्जिता।

२९. सा च कथम् अपवर्जिता।

३०. आखण्डलतुल्यधामभिः इत्यस्य कः अर्थः।



**व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः।**
**प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः।।३०**

**अन्वयः** - ये मायाविषु मायिनः न भवन्ति ते मूढधियः पराभवं व्रजन्ति। शठाः तथाविधान् असंवृताङ्गान् निशिता इषवः इव प्रविश्य घ्नन्ति।

**अन्वयार्थः** - ये केचन जनाः,मायाविषु मायावत्सु कपटिषु, मायिनः कपटिनः, न भवन्ति, (ते अमायिनः), मूढधियः मन्दबुद्धयः, पराभवम् पराजयम् अपमानम्, व्रजन्ति यान्ति प्राप्नुनवन्ति। हि यतः, शठाः मायिनः धूर्ताः, तथाविधान् तादृशान्, असंवृताङ्गान् असंवृतम् अनाच्छादितम् अङ्गं शरीरं येषां तान् असंवृताङ्गान् कवजादिना अरक्षितदेहान्, निशिताः तीक्ष्णीकृताः, इषवः बाणाः, इव, प्रविश्य अन्तःप्रविश्य, घ्नन्ति मारयन्ति विनाशयन्ति।

**सरलार्थः** - ये पुरुषाः मायावन्तः कपटपूर्णाः न भवन्ति ते पुरुषाः सर्वत्र पराजयं प्राप्नुवन्ति। यतः कुटिलपुरुषाः आत्मीयाः भूत्वा तादृशान् सरलान् विनाशयन्ति। यथा कवजादिभिः अरक्षितान् देहान् प्रविश्य तीक्ष्णाः शराः देहान् नाशयन्ति। अतः मायाविषु सरलता न समुचिता।

**तात्पर्यार्थः** - अस्मिन् श्लोके महाकविना प्रतिपाद्यते यत् आर्जवं हि कुटिलेषु न नीतिः। शठे शाठ्यम् एव आचरेत् इति नीतिः। तथाहि मूढधियां तेषां सदैव पराजयो भवति ये कपटिषु कपटं न कुर्वन्ति। यथा युद्धे तीक्ष्णाः बाणाः कवजरहितान् देहान् शीघ्रमेव अन्तः प्रविश्य नाशयन्ति। तथैव ते मायाविनः धूर्ताः सरलानां जनानां निखिलान् अन्तर्भावान् विज्ञाय तान् नाशयन्ति।

**व्याकरणविमर्शः -**

- मूढधियः - मूढा धीर्येषां ते मूढधियः इति बहुव्रीहिसमासः।
- असंवृताङ्गान् - न संवृतानि असंवृतानि इति नञ्तत्पुरुषसमासः, असंवृतानि अङ्गानि येषां ते असंवृताङ्गाः इति बहुव्रीहिसमासः, तान् असंवृताङ्गान्।
- घ्नन्ति - हन्-धातोः लटि प्रथमपुरुषबहुवचने रूपमिदम्।

**सन्धिकार्यम्-**

- शठास्तथाविधान् = शठाः + तथाविधान्।
- इवेषवः = इव + इषवः।

**प्रयोगपरिवर्तनम् -**

- यैः मायाविषु मायिभिः न भूयते, तैः मूढधीभिः पराभवो व्रज्यते । शठैः प्रविश्य निशितैः इषुभिरिव तथाविधाः असंवृताङ्गाः हन्यन्ते।

**अलङ्कारालोचना -**

- अत्र शठाः निशिताः इषवः इव इति साम्यप्रतिपादनात् उपमा अलङ्कारः।

**कोषः -**

- शठः - “निकृतस्त्वनृजुः शठ”इत्यमरः।





## पाठगतप्रश्नाः-७

३१. मूढधियः के।

३२. ते च किं व्रजन्ति।

३३. शठाः कान् प्रविश्य घ्नन्ति।

३४. ते च शठाः तान् किम् इव प्रविश्य घ्नन्ति।

३५. निशिताः इषवः इत्यस्य कः अर्थः।



## पाठसारः

सभायां यदि कथाप्रसङ्गेन कस्यापि मुखात् युधिष्ठिरस्य कीर्तिं शृणोति, तदा दुर्योधनः भवतां विशेषस्य अर्जुनस्य पराक्रमं स्मृत्वा हतदर्पो भवति। यथा विषदूरीकरणमन्त्रस्य श्रवणेन विषधरः सर्पः विषं त्यक्त्वा नताननः भवति। तस्मात् कारणात् भवति युधिष्ठिरे स दुर्योधनः कपटं कर्तुं प्रवृत्तः। अर्थात् त्वां निहन्तुम् इच्छति इत्यर्थः। अतः भवता करणीयः उपायः शीघ्रं क्रियताम्। यतः परोक्तानि वचनानि अन्वेषयतां दूतानाम् अस्माकं वचनानि वृत्तान्तप्रधानानि भवन्ति। अर्थात् मादृशाः अल्पबुद्धयः दूताः केवलं वार्ताभिज्ञाः न तु कार्याभिज्ञाः। अतः भवान् एव विचार्य समुचितं कर्म सम्पादयतु। इत्थं वचनं युधिष्ठिराय निवेद्य सः वनेचरः पारितोषिकं च गृहीत्वा स्वगृहं प्रस्थितः। तदनन्तरं राजा युधिष्ठिरः द्रौपद्याः भवनं प्रविश्य भीमार्जुनादीनां स्वभ्रातृणां समीपे वनेचरेण उक्तं वचनम् आख्यातवान्। अथवा राजा दुर्योधनः भवनं प्रविश्य स्वभ्रातृणां पुरतः वनेचरेण उक्तं वचनम् आख्यातवान्। युधिष्ठिरस्य कथनानन्तरं शत्रूणां कौरवाणां समृद्धिं युधिष्ठिरस्य मुखाद् एव श्रुतवती। ततः शत्रूणां कौरवाणां कारणात् प्राप्तं दुःखं किञ्च दुःखाद् अपि उत्पन्नं मानसिकविकारं निरोद्धुं असमर्था सत्यपि युधिष्ठिरस्य क्रोधं तथा उत्साहं वर्धयितुं वचनानि उक्तवती। भवादृशेषु शास्त्रज्ञेषु व्यवहारज्ञेषु च स्त्रीजनैः उक्तं किमपि वचनम् भवतः तिरस्कार इव भवति। तथापि शत्रुकृतैः अवमाननाभिः मनोव्यथाभिः च अहं द्रौपदी अत्यन्तं क्षुब्धहृदया अस्मि। अत एव स्त्रीजनोचितं धैर्यविनयादिकम् आचारं विहाय भवते किञ्चित् कथयामि। इन्द्रसदृशपराक्रमाः भवतः वंशजाः दीर्घकालं यावत् सम्पूर्णा भूमिरियं वशीकृता आसीत्। किन्तु सा भवतः हस्तेनैव विनाशिता। यथा मदमत्तः हस्ती स्वकण्ठात् माल्यम् दूरीकरोति। ये पुरुषाः मायावन्तः कपटपूर्णाः न भवन्ति ते पुरुषाः सर्वत्र पराजयं प्राप्नुवन्ति। यतः कुटिलपुरुषाः आत्मीयाः भूत्वा तादृशान् सरलान् विनाशयन्ति। यथा कवजादिभिः अरक्षितान् देहान् प्रविश्य तीक्ष्णाः शराः देहान् नाशयन्ति। अतः मायाविषु सरलता न समुचिता।





## पाठान्तप्रश्नाः

१. युधिष्ठिराणां कीर्तिं श्रुत्वा दुर्योधनस्य का दशा भवतीति वर्ण्यताम्।

२. द्रौपदी युधिष्ठिरम् उत्साहयितुं कदा किं कृतवती।

३. द्रौपदी कथं वक्तुं प्रेरिता।

४. युधिष्ठिरेण कथं मही अपवर्जिता इति द्रौपदीवचनानुसारं वर्णयत।

५. ये मायाविषु मायिनः न भवन्ति तेषां दशा वर्ण्यताम्।

६. समानार्थकानि धातुरूपाणि मेलयत।

| क-स्तम्भः | ख-स्तम्भः |
|---|---|
| १. उदाजहार | क. त्यक्ता। |
| २. व्यथते | ख. याति। |
| ३. अपवर्जिता | ग उक्तवती। |
| ४. घ्नन्ति | घ गवेषयताम्। |
| ५. व्रजति | ङ. विनाशयन्ति। |
| ६. विधीयताम् | च. दुःखायते। |
| ७.व्यवसाययति | छ. कथिता। |
| ८. आचचक्षे | ज. प्रेरयति। |

उत्तराणि - १-ग, २-च, ३-क, ४-ङ, ५-ख, ६-घ, ७-ज, ८- छ।



## किमधिगतम्

१) मायाविषु सरलता न समुचिता।

२) दूतानां वार्ता प्रवृत्तिसारा भवति।

३) स्त्रीणाम् उपदेशः कीदृशो भवतीति ज्ञातम्।

४) कवेः प्रतिभा कीदृशी भवतीति स्पष्टमभूत्।

५) पद्यानि कथं छन्दोबद्धानि भवन्ति इति स्पष्टम्।





## योग्यताविस्तारः

### महाकविः भारविः

**जीवनवृत्तान्तः**

भारवेः जीवनवृत्तविषये निश्चितरूपेन तथा किमपि वक्तुं न शक्यते, गदसिंहनामकः किरातार्जुनीयस्य जनैकः टीकाकर्ता स्वस्य टीकायाः प्रारम्भे उल्लिखितवान्- "कविकुञ्जरो भारविः प्राणदेवापरनामधेयः किरातार्जुनीयकाव्यं प्रणिनीषुस्तल्लक्षणं वस्तुनिर्देशं प्रणयन्नाह" इति, एतेन प्रतीयते यत् प्राणदेवः भारवेः वास्तविको नाम किञ्च प्रखरप्रतिभाकारणात् भारविः इति नाम्ना स प्रसिद्धः आसीत्।

**कृतिः**

भारवेः एकैव रचना अधुना उपलब्धा वर्तते सा च 'किरातार्जुनीयम्' इति। एवं सामर्थ्यशाली सिद्धसरस्वतीकः कविः एकमेव ग्रन्थं रचितवान् इति तु कल्पयितुमेव न शक्यते यतो हि कालकवलिते संस्कृतसाहित्ये यथा कतिपयानां अमरकविनामेव नाममात्रमवशिष्यते तथैव अस्यापि तावत् एका एव कृतिः प्रकाशिता। यद्यपि एषैव तस्य अमरत्वसाधने पर्याप्ता। अपि च भारविविषयकः कतिपयो मुक्तकोऽपि प्राप्यते, यथा श्रीधरादासप्रणीते सदुक्तिकर्णामृते उक्तं–

सोद्वेगं करिकृत्तिवाससि भवद्व्रीडन्वितं ब्रह्मणि त्रैलोक्यैक-गुरावनादरवलत्तारं शचीभर्तरी। त्रासामीलितपक्ष्मभासविलसत्प्रेमप्रसन्नं हरौ क्षीरोदोत्थितया धिया विनिहितं चक्षुः शिवायास्तु वः।। इति।

**रचनाशैली**

महाकवेः भारवेः रचना लोके एवं प्रसिद्धा यत् तस्य रचना संस्कृतकाव्यानां बृहत्त्रयीषु गण्यते। अर्थगौरवं तस्य रचनाशैल्याः मुख्यस्तम्भः, यच्च भारवेरर्थगौरवम् इति वचनादेव स्पष्टं भवति। शिशिरस्य समयः समागतः इति क्षुद्रं वाक्यं कविना इत्थं प्रकटितम् -

**कतिपयसहकारपुष्परम्यस्तनुतुहिनोऽल्पविनिद्रसिन्दुवारः।**
**सुरभिमुखहिमागमान्तशंसी समुपययौ शिशिरः स्मरैकबन्धुः।। इति।**

अस्य अर्थो भवति - अथ कामदेवस्य अद्वितीयं मित्रम्, वसन्तागमनस्य सूचकः, हेमन्तस्य अन्तकारी, आम्रकुसुमशोभया रमणीयः, सिन्दुवारप्रकाशितपुष्पैः सुशोभितः शिशिरर्तुः समागतः इति।

संस्कृतसाहित्ये किरातार्जुनीयस्य न्यूनातिन्यूनं सप्तत्रिंशत्(३७) टीकाः विरचिताः। यासु मल्लिनाथस्य घंटापथ-टीका सर्वश्रेष्ठा। १९१२ ख्रिस्ताब्दे कार्ल कैप्पलर महोदयः हारवर्ड ओरियेंटल सीरीज इत्यस्य अन्तर्गतस्य किरातार्जुनीयस्य जर्मन-भाषया अनुवादम् अकार्षीत्। आङ्गलभाषायामपि अस्य भिन्न-भिन्न-भागानां षडाधिकाः अनुवादाः कृताः।

**कुरुक्षेत्रम्** - हरियाणा-राज्यस्य प्रमुखं मण्डलं तथा तसय् मुख्यालयः वर्तते। स्थानमिदं हरियाणा-राज्यस्य उत्तरस्यां दिशि वर्तते। तथा च देहली-अमृतसर-स्थानयोः संयोजके राष्ट्रियराजमार्गे



रेलमार्गे च स्थानमिदम् अवस्थितम्। हिन्दूनां तीर्थस्थलरूपेण एतत् स्थानम् अतीव महत्वपूर्णम् अस्ति। एवं विश्वासः वर्तते यद् - महाभारतयुद्धम् अस्मिन्नेव स्थले अभवत् किञ्च भगवान् श्रीकृष्णः अस्मिन् क्षेत्रे एव अर्जुनं प्रति गीताम् उपदिष्टवान्।अस्य पौराणिकं माहात्म्यम् इतोपि अधिकं वर्तते। स्थानमिदं ऋग्वेदे तथा यजुर्वेदे वर्णितमस्ति। अत्र विद्यमानायाः नद्याः सरस्वत्याः अपि अत्यन्तं माहात्म्यं वर्तते।

**द्वैतवनम्** - स्थानमिदं मेरठ-प्रदेशात् उत्तरस्यां प्रायः विंशतियोजनदूरे अवस्थितम्, तच्च देववन्दः इत्युच्यते। उत्तरप्रदेशस्य सहारपुरमण्डलान्तर्गतमिदं स्थानम्। वनमिदं कालीनद्याः पूर्वापरदिशयोः योजनपरिमितं स्थानं व्याप्य दशयोजनदूरे अवस्थित. सत् मजफ्फर-नगरं विस्तीर्णम्। एवं हि श्रूयते यत् - मीमांसादीनां प्रवर्तकस्य महर्षेः जैमिनेः अपि जन्मभूमिः द्वैतवनमिदम्।

## २२.३) सन्दर्भग्रन्थसूची


- महाकविः भारविः। किरातार्जुनीयम् (मल्लिनाथ-कृत-घण्टापथव्याख्यया श्रीजनार्दनपाण्डेयकृतया विवृत्या, हिन्दीभाषानुवादेन च समन्वितम्)। १९८४। मोतीलाल बनारसीदास।
- महाकविः भारविः। किरातार्जुनीयम् (घण्टापथ-सुधा-हिन्दीव्याख्योपेतम्)। २००४। चौखम्बा संस्कृत संस्थान। वाराणसी।




## पाठगतप्रश्नानामुत्तराणि

**उत्तराणि-१**

१. उरगः इव।

२. कथाप्रसङ्गेन जनैः उदाहृतात् तव अभिधानात्।

३. अनुस्मृताखण्डलसूनुविक्रमः नताननः।

४. सुदुःसहात् मन्त्रपदात्।

५. तव तार्क्ष्यवासुक्योः वा नामकथनात्।

**उत्तराणि-२**

६. जिह्मं कर्तुम्।

७. विधेयम् उत्तरम्।

८. परप्रणीतानि वचांसि।

९. प्रवृत्तिसाराः।

१०. कपटम्।

**उत्तराणि-३**

११. वचः आचचक्षे।

१२. कृष्णासदनं प्रविश्य।

१३. आत्तसत्क्रिये वनसन्निवासिनां पत्यौ गते।

१४. वचनम् ईरयित्वा।

१५. गृहीतपारितोषिके।

**उत्तराणि-४**

१६. द्रुपदात्मजा द्रौपदी।

१७. युधिष्ठिरस्य कथनानन्तरम्।

१८. द्विषतां सिद्धिं निशम्य।

१९. नृपस्य मन्युव्यवसायदीपिनीः गिरः।

२०. शत्रुभ्यः आगताः अपाकृतीः विनिगन्तुम्।



२१. **उत्तराणि-५**

२२. प्रमदाजनोदितम् अनुशासनम्।

२३. निरस्तनारीसमयाः दुराधयः।

२४. द्रौपदीम्, वक्तुम्।

२५. भवादृशेषु सर्वज्ञेषु।

२६. तिरष्कारः।

**उत्तराणि-६**

२७. युधिष्ठिरस्य वंशजैः।

२८. आखण्डलतुल्यधामानः भूपतयः।

२९. युधिष्ठिरेण स्वहस्तेन।

३०. मत्तगजेन अपवर्जिता स्रक् इव।

३१. इन्द्रसदृशतेजोभिः।

**उत्तराणि-७**

३२. ये मायाविषु मायिनः न भवन्ति।

३३. पराभवम्।

३४. तथाविधान् मूढधियः।

३५. असंवृताङ्गान् निशिताः इषवः इव।

३६. तीक्ष्णीकृताः बाणाः।

॥ इति द्वाविंशः पाठः ॥

# राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानम्

## माध्यमिककक्षायाः पाठ्यक्रमः

## संस्कृतसाहित्यम् (२४८)

### औचित्यम्

संस्कृते काव्यसम्पत्तिः सागरवत् अपारा अमूल्या च वर्तते। तत्र अस्माकं सनातनज्ञानराशिः तदात्मकं जीवनं च प्रतिबिम्बितं वर्तते। कवीनां काव्यानाम् अलङ्कारशास्त्रस्य च अध्ययने छात्रस्य भूमिका अपेक्षिता। काव्यराशेः मूलं स्वरूपं वेदे एव दृश्यते। साहित्यस्य प्रवेशार्थं वेदादिवाङ्मयस्य परिचयः आवश्यकः अस्ति। अपि च वेदेन उपदिष्टं तत्त्वमेव काव्येन प्रकटीक्रियते। वेदस्तु षडङ्गसहितः अस्ति। अतः वेदस्य षडङ्गानाञ्च परिचयः अपि आवश्यकः। वेदकाव्ययोः मध्यवर्ति पुराणसाहित्यम्। तस्मात् पुराणस्यापि सामान्यपरिचयः आवश्यकः। स च अत्र अस्ति। एवं वेदस्य पुराणस्य च परिचयं प्राप्य काव्यस्य प्रवेशः भवति।

संस्कृतिर्नाम सुपरिष्कृता जीवनपद्धतिः यया क्रमशः आत्मोद्धारः सिद्ध्यति। भारतीयसनातनसंस्कृतिः चतुर्भिः पुरुषार्थैः परिकल्पिता वर्तते। धर्मः अर्थः कामः मोक्षः इति चत्वारः पुरुषार्थाः। कामो नाम लौकिकजीवनसन्तृप्तिः सुखं वा। अर्थो नाम तादृशसुखलाभार्थम् अपेक्षितानि वस्त्र-आहार-धन-क्षेत्रादीनि जीवनसाधनानि। धर्मो नाम अर्थानामर्जने तद्द्वारा सुखलाभे शास्त्रोक्तः नियमविशेषः। मोक्षः अनन्तः शाश्वतानन्दः। एतेषां विवेके वेदः परमं प्रमाणम्।

कवेः कर्म काव्यम् इति आलङ्कारिका वदन्ति। तच्च रमणीयं शब्दार्थयुगलम्, रसात्मकं वाक्यम् इत्यपि अन्यान्यविद्वांसः वदन्ति। अस्मत्परम्परायां जीवनविवेकाय शास्त्रमार्गः इव काव्यमार्गोऽपि अतीव आदृतो वर्तते।

वेदः प्रभुसम्मितः इत्युच्यते। पुराणं मित्रसम्मितम् उत्युच्यते। काव्यं हि कान्तासम्मितं भवति। कान्तासम्मितं नाम कान्तासदृशम् इत्यर्थः। कान्ता नाम प्रिया भार्या इत्यर्थः। (यदा) लोके साध्वीं कुशलां च कान्तां किमपि जिज्ञासमानः पृच्छति। तदा सा साक्षात् अभिप्रायवाचकं वाक्यं परित्यजति। ततः स्मित-कटाक्ष-मुखावनमनादिचेष्टाविशेषपुरःसरं परोक्षतः स्वाभिप्रायसूचकैः वचनैः अभिमतार्थं ज्ञापयन्ती तत्र कान्तं प्रवर्तयति। यथा किम् आम्रफलम् आस्वादयसि उत द्राक्षाफलम् इति कान्तः कान्तां पृच्छति। तदा आम्रफलमास्वादयामि इति साक्षात् न वदति। आम्रफलं मधुरं परिमलयुक्तं विविधवर्णरञ्जितं भवति इति वदति। तेन एतदेव उक्तं भवति यत् अहम् आम्रफलम् आस्वादयितुमिच्छामि इति। एवं कान्तानां यथा परोक्षतः स्वाभिप्रायाभिव्यञ्जनशैली वचने भवति तथा काव्यस्यापि भवति। अतः काव्यं कान्तासम्मितम् इति प्रसिद्धम्। कान्तावचनं यथा सरसं मनोहरं भवति तथा काव्यमपि सरसरमणीयं भवति येन सहृदयहृदयम् आकृष्टं भवति। एतस्मात् कारणात् वेदात् पुराणात् च विलक्षणं भवति।

ईदृशनां काव्यानाम्, कवीनाम्, काव्यशास्त्रस्य च परिचयः छात्राणाम् भवतु इति धिया संस्कृतसाहित्यम् नाम पत्रं पाठ्यत्वेन योज्यते। (Communications Skill) भावविनिमयकौशलम् पुरा अद्यापि च गुरुत्वम् आवहति। स्वाभिप्रायः कथं साक्षात् परोक्षतः वा प्रकटयितुं शक्यः इति काव्यात् ज्ञायते। इत्थं काव्याध्ययनस्य बहूनि प्रयोजनानि सन्तीति औचित्यम् आवहति यद् सर्वश्रेष्ठानां कवीनाम् काव्यानि पठनीयानि इति।

### अधिकारी

अयं पाठ्यविषयः सम्पूर्णरूपेण संस्कृतभाषया लिखितः अस्ति। परीक्षा अपि संस्कृतमाध्यमेन एव भविष्यति। अतः अस्य पाठस्य कः अधिकारी इति नूनम् समुदेति प्रश्नः।

अत्र स छात्रः अधिकृतः यः -

- अधीतव्याकरणकोषः काव्यरसपिपासुः।
- सरलसंस्कृतं, संस्कृतसाहित्यास्य सरलगद्यांशान् पद्यांशान् च पठितुम् बोद्धुं च शक्नोति।
- सरलसंस्कृतं बोद्धुं शक्नोति।
- स्वभावं संस्कृतभाषया लिखित्वा प्रकटयितुं शक्नोति।

## प्रयोजनम् (सामान्यम्)

माध्यमिकस्तरे संस्कृतसाहित्यस्य पाठ्यत्वेन योजनस्य कानिचन उद्देशानि अत्राधो दीयन्ते।

- जीवनस्य चरमलक्ष्यं सुखलाभः। इह परत्र च। काव्याध्ययनेन तत् सिद्ध्यति। अतः अध्येतॄणां सिध्यतु।
- बहूनि काव्यानि सुखप्रतिपादनाय प्रवृत्तानि सफलानि विफलानि च भवन्ति। तत्र वैफल्यस्य कारणानि कानि इति ज्ञात्वा छात्रः काव्यस्य सूक्ष्मं चिन्तनं कर्तुम् प्रभवेत्।
- कविः यथा स्वस्य विचित्राभिः उक्तिभिः जनान् रञ्जयति तथा काव्याध्ययनेन छात्रोऽपि सामर्थ्यम् अर्जयेत्। अन्यकृतस्य काव्यस्य च आदरं कुर्यात्।
- स्वस्य स्वपरिचितानां च जीवनं काव्यरसेन परिपूर्णं कर्तुं प्रवर्तते।
- संस्कृतकाव्यानां महिमानम् अवगम्य तत्प्रचारे बद्धादरः सश्रद्धं प्रवर्तताम्।
- अति प्राचीनाया भारतीयज्ञानसम्पदः वैज्ञानिकता सर्वजनोपकारिता महिमा च सगर्वं जगति प्रसारयेत् छात्रः।
- काव्यग्रन्थानाम् सरलान् अंशान् पठित्वा छात्राः तेषाम् अंशानाम् अर्थान् ज्ञास्यन्ति। ते स्वतः मौखिकीं लिखितां च अभिव्यक्तिं कर्तुं शक्ष्यन्ति।
- काव्याध्ययनेन छात्राः महाविद्यालयस्तरे विश्वविद्यालयस्तरे च प्रवर्तमानेषु पाठ्यक्रमेषु अध्ययनार्थम् अवसरं प्राप्तुं समर्थाः भविष्यन्ति।
- काव्येषु रुचिमान् भूत्वा शक्तः संलग्नः भविष्यति।

## विशिष्टोद्देश्यानि

### संस्कृतसाहित्ये प्रवेशस्य सामर्थ्यम्

- काव्येषु के विषया अन्तर्भवन्ति इति सामान्यज्ञानं भवेत्।
- कवीनां परिचयं प्राप्नुयात्।
- काव्यानां परिचयं प्राप्नुयात्।
- पठितसामग्रीम् आश्रितानां प्रश्नानाम् उत्तराणि दातुं प्रभवेत्।।

### संस्कृतसाहित्याध्ययने सामर्थ्यम्

- काव्यानाम् अध्ययनस्य कश्चित् विशिष्टः क्रमः वर्तते। तज्ज्ञानं प्राप्य काव्यस्य अग्रे अध्ययने समर्थो भवेत्।
- काव्ये विद्यामानां छन्दसाम् अलङ्काराणां व्याकरणांशान् च ज्ञास्यति।
- तेषां ज्ञानेन अन्यत्र विद्यमानानाम् अलङ्कारादीनां ज्ञानं भवेत्।

- अस्य पाठ्यविषयस्य ज्ञानेन तस्मिन् दर्शने विद्यामानानाम् अन्येषाम् आकरग्रन्थानाम् अध्ययने समर्थो भवेत्।

**संस्कृतसाहित्यप्रयोगस्य सामर्थ्यम्**

- संस्कृतकाव्यानाम् अध्ययनेन स्वस्य वाचि काव्यात्मकता स्यात्।
- अपरकृतस्य काव्यप्रयोगस्य ज्ञानं भवेत्।
- भावविनिमयः प्रभावितया कर्तुम् प्रभवेत्।
- वाचि विद्यमानं संयोगवियोगसामर्थ्यम् अवगच्छेत्।
- यथा वैद्यः जनं दृष्ट्वा तस्य रोगादिकं चिन्तयति। चौरः वित्तकाषादिकं चिन्तयति। वणिक् क्रेतारम् पश्यति। तथा जगतः कविरूपेण दर्शने समर्थो भवेत्।

## पाठ्यसामग्री

**पाठ्यक्रमेण सह निम्नलिखितसामग्री समायोजिता भविष्यति**

- द्वे मुद्रिते पुस्तके।
- एकं शिक्षकाङ्कित-मूल्याङ्कनप्रपत्रम् प्रदास्यते। अनेन सह छात्रैः एकं परियोजनाकार्यमपि (Project) करणीयम्।
- साहित्यस्य शिक्षणं प्रायोगिकरूपेण अपि भविष्यति। परन्तु प्रायोगिकपरीक्षा कापि नास्ति।
- पाठनिर्माणे संपर्ककक्षासु च अध्यापनकाले छात्रेषु जीवनकौशलानां सम्यक् विकासः भवेत् इति ध्यातव्यम् भविष्यति। अनेन तेषु स्वतः युक्तिसमन्वितचिन्तनशक्तेः विकासः भविष्यति।
- मुक्तविद्यालये प्रवेशोत्तरं पाठ्यक्रममिमं विद्यार्थी एकवर्षत: अधिकाधिकं पञ्चवर्षेषु पूरयितुं शक्नोति।

## अङ्कमूल्यायनप्रविधिः परीक्षायोजना च

- पत्रस्य (१००) शतम् अङ्काः सन्ति। परीक्षाकालः होरात्रयात्मकः। अस्य पत्रस्य लिखितस्वरूपमेवास्ति (Theory)। प्रायोगिकरूपं (Practical) किमपि नास्ति। क्रमिकम् (Formative) समुच्चितं (Summative) चेति द्विविधं मूल्यायनं भविष्यति।
- **क्रमिकं मूल्यायनम्** - विंशतेः अङ्कानां (२०) शिक्षकाङ्कितस्य कार्यस्य (TMA) एकं पत्रं स्यात्। अस्य मूलायनम् अध्ययनकेन्द्रे (Study Centre) भवेत्। अस्य कार्यस्य अङ्काः अङ्कपत्रिकायां (Marks sheet) पृथक् उल्लिखिताः स्युः।
- **समुच्चितं मूल्यायनम्** - वर्षे वारद्वयं (मार्चमासि अक्टोबरमासि च) बाह्यपरीक्षा भविष्यति। तत्र परीक्षायां समुच्चितं मूल्यायनं भविष्यति।
- प्रश्नपत्रे ज्ञानम् (Knowledge), अवगमम् (Understanding) अभिव्यक्तिं (Application skill) चावलम्ब्य युक्तानुपातेन प्रश्नाः समाविष्टाः स्युः।
- परीक्षासु अतिलघूत्तरात्मक- लघूत्तरात्मक-निबन्धात्मक-प्रश्नानामपि समावेशः भविष्यति।
- सूत्रार्थः सूत्रव्याख्या रूपसाधनम् इति त्रयो मुख्याः विषयाः स्युः। अन्ये प्रसक्तानुप्रसक्ताः केचिद् विषयाः अपि स्युरिति अवधेयम्।
- उत्तीर्णतायै पणः (condition) - प्रतिशतं त्रयस्त्रिंशद् (३३%) अङ्काः उत्तीर्णतायै पणः (मानदण्डः) वर्तते।
- संस्थानस्य परीक्षायाम् उत्तरलेखनभाषा - संस्कृतम् (अनिवार्यम्)

## अध्ययनयोजना

- निर्देशभाषा (Medium of instruction) - संस्कृतम्।
- स्वाध्यायाय कालावधिः (Self-study hours) २४० होराः
- न्यूनतः त्रिंशत् (३०) सम्पर्ककक्षाः (Personal Contact Programme - PCP) अध्ययनकेन्द्रेषु भविष्यन्ति।
- भारांशः - सैद्धान्तिकः (Theory) शतं प्रतिशतम्।
- प्रायोगिकम् (Practical) - नास्ति।

## अङ्कविभाजनम्

अग्रे सारण्यां द्रष्टव्यम्

## पाठ्यविषयस्य उद्देशः (पाठ्यविषयबिन्दवः)

माध्यमिककक्षाया साहित्यस्य पुस्तके निम्नविषयाः अन्तर्भवन्ति। विवरणमधस्तादुपन्यस्यते।-

समग्रस्य पाठ्यविषयस्य भागाः प्रकल्पिताः सन्ति। प्रतिभागम् कति पाठाः, स्वाध्यायाय कति होराः, सैद्धान्तिकपरीक्षायाम् कियान् अंशः, प्रायोगिकपरीक्षायाम् कियान् अंशः, प्रत्यध्यायम् अङ्कविभाजनं चेति विषयाः अत्र प्रदीयन्ते।

## परिच्छेदः - १ सुभाषितादिकं कथासाहित्यम् (पाठाः १-७)

**अध्यायस्य औचित्यम्**

काव्येषु मनोरमं सुभाषितम्। व्यवहारोपयोगिज्ञानस्याकरः सुभाषितानि। सरलानि सरसानि च सुभाषितानि अस्मिन् विभागे उपन्यस्य व्याख्यास्यन्ते। तत्र गूढं किमपि अस्ति चेत् जनाः उद्ग्रीवा दृश्यन्ते तज्ज्ञानाय। अतः कविभिः प्रहेलिका समस्याश्लोकाः च आविष्कृताः। प्रतिनिधित्वेन केचिदस्मिन् विभागे प्रदास्यन्ते।

संस्कृतकाव्येषु वेतालपञ्चविंशतिः अति प्रसिद्धः गद्यकाव्यग्रन्थः। तस्य काश्चन चिताः कथाः प्ररोचनाय आदाय छात्रोपयोगितया उपस्थापयिष्यन्ते। तथैव शुकसप्ततिः पञ्चतन्त्रं च। अलोकसामान्यशैल्या बोधः मोदः कथं कार्यते इति अत्र प्रदर्श्यते।

## परिच्छेदः - २ काव्यपरिचयः (पाठाः ८-११)

**अध्यायस्य औचित्यम्**

काव्यरसास्वादं नैके कुर्वन्ति सदा। परन्तु काव्यं किम्, कः कविः, कः काव्यरसास्वादे अधिकारी, कतिविधं काव्यम् इति इमे विषयाः जिज्ञासितव्याः सन्ति। अतः ते अस्मिन् विभागे अन्तर्भाविताः। इदं न काव्यम्। इदं काव्यशास्त्रं कथ्यते। सामान्यतः ज्ञानमत्र भवतु इति अत्र उपन्यस्यते।

## परिच्छेदः - ३ रामायणाध्ययनम् (पाठाः १२-१५)

**अध्यायस्य औचित्यम्**

आदिकाव्यं रामायणम्। तत्र हनूमान् ब्राह्मणरूपधारी दण्डकारण्ये रामेण साक्षात् करोति। तयोः अति रम्यः संवादः अत्र वाल्मीकिमुनेः शैल्या उपन्यस्यते। साक्षात् रामायणस्य श्लोकानां व्याख्यानम् व्याकरणम् इत्यादिविषयाः प्रदर्शयिष्यन्ते।

## परिच्छेदः - ४ काव्याध्ययनम् (पाठाः १६-२२)

**अध्यायस्य औचित्यम्**

नाटकं रम्यमेव। नात्र सन्देहः। नाटकेषु भासस्य नाटकानि अत्यन्तं प्रसिद्धानि। कर्णभारमिति नाटकं महाभारतम् उपजीव्य विरचितम्। अनेन नाटकेन कर्णस्य त्यागमाहात्म्यं द्योत्यते, स्वस्य जीवनसङ्कटं जानन् अपि कर्णः स्वस्य कवचकुण्डले ब्राह्मणरूपाय इन्द्राय सहासं दत्तवान्। कर्णस्य अयं त्यागः आबहोः कालात् प्रसिद्धः। एतादृशः त्यागः सर्वेषां मानवानां कृते सर्वदा शिक्षणीयः विषयः।

महाकविः भारविः महाभारतस्य वनपर्वणः प्रसङ्गमेकं गृहीत्वा किरातार्जुनीयम् इति प्रसिद्धम् एकं महाकाव्यं विरचितवान्। कविः भारविः स्वप्रतिभया अभिनवरूपेण ताम् एव कथां वर्णितवान्। किरातार्जुनौ अधिकृत्य एव कविना अयं ग्रन्थो विरचितः। तस्य किञ्चित् भागः अत्र छात्राभिरुचिवर्धनाय प्रदीयते।

## पाठ्यविषयस्य उद्देशः (पाठ्यविषयबिन्दवः)

माध्यमिककक्षायाः संस्कृतसाहित्यस्य पुस्तके निम्नविषयाः अन्तर्भवन्ति -

| क्र.सं. | | मुख्यबिन्दवः | स्वाध्यायाय होराः | भारांशः (अङ्काः) |
|---|---|---|---|---|
| १ | प्रथमः परिच्छेदः | **सुभाषितादिकम्-** | ७८ | ३२ |
| | पाठः - १ | सुभाषितानि- दशानाम् सुभाषितानाम्अन्वयः, अन्वयार्थः, भावार्थः | | |
| | पाठः - २ | सुभाषितानि- नवानां सुभाषितानाम्अन्वयः, अन्वयार्थः, भावार्थः | | |
| | पाठः - ३ | प्रहेलिका समस्याश्लोकाः च- अन्वयः, अन्वयार्थः, भावार्थः, सति प्रयोजने विशेषटिप्पणी व्याकरणटिप्पणी च | | |
| | | **कथासाहित्यम्-** | | |
| | पाठः - ४ | कथा - वेतालपञ्चविंशतिः (२) - १) कोऽनङ्गरतिपतिः, २) कःत्यागी -विवृतिः व्याख्या, सरलार्थः, तात्पर्यार्थः व्याकरणटिप्पणी। | | |
| | पाठः - ५ | कथा - वेतालपञ्चविंशतिः (२)- १) को मे भर्ता ? २) कथोपसंहृतिः - विवृतिः व्याख्या, सरलार्थः, तात्पर्यार्थः व्याकरणटिप्पणी। | | |
| | पाठः - ६ | कथाः - शुकसप्ततिः- १) सुदर्शनधीः २) विषाङ्गनावृत्तम् ३) बुद्धिः सर्वत्र ज्येयसी- विवृतिः व्याख्या, सरलार्थः, तात्पर्यार्थः व्याकरणटिप्पणी। | | |
| | पाठः - ७ | कथाः - पञ्चतन्त्रम्- १) मूर्खानां न समादरः २) यतो धर्मस्ततो जयः - विवृतिः व्याख्या, सरलार्थः, तात्पर्यार्थः व्याकरणटिप्पणी। | | |
| २ | द्वितीयः परिच्छेदः | **काव्यपरिचयः-** | ४० | १६ |
| | पाठः - ८ | काव्यशास्त्रप्रवेशः- १- वेदपुराणानां परिचयपुरःसरं काव्यप्रवेशः | | |

| | | | | |
|---|---|---|---|---|
| | पाठः - ९ | काव्यशास्त्रप्रवेशः-२- साहित्यकाव्यकविप्रभृतिपदानामर्थाः- कविः काव्यम् साहित्यम् प्रतिभा वृत्तिः इत्यादिविषयाः | | |
| | पाठः - १० | काव्यशास्त्रप्रवेशः-३ - साहित्यस्याधिकारी प्रयोजनम् च- सहृदयः साहित्यस्याधिकारी प्रयोजनम् इत्यादिविषयाः | | |
| | पाठः - ११ | काव्यप्रकारपरिचयः- दृश्य-श्रव्य-नाटक-गद्य-पद्य-चम्पू-महाकाव्यादिक्रमेण काव्यप्रकारपरिचयः | | |
| **३** | **तृतीयः परिच्छेदः** | **रामायणाध्ययनम्-** | **४२** | **१८** |
| | पाठः - १२ | वाल्मीकिरामायण-किष्किन्धाकाण्डे तृतीयसर्गे - राम-हनूमत्-संगमः- (१-१० श्लोकाः) - रामलक्ष्मणाभ्यां सह हनुमतः प्रथमः साक्षात्कारः। अन्वयः, अन्वयार्थः, सरलार्थः | | |
| | पाठः - १३ | वाल्मीकिरामायण-किष्किन्धाकाण्डे तृतीयसर्गे - राम-हनूमत्-संगमः- (११-२३) श्लोकाः - हनुमता कृता रामलक्ष्मणयोः प्रशंसा। अन्वयः, अन्वयार्थः, सरलार्थः | | |
| | पाठः - १४ | वाल्मीकिरामायण-किष्किन्धाकाण्डे तृतीयसर्गे - राम-हनूमत्-संगमः- (२४-३५) श्लोकाः - -रामेण कृता हनुमत्प्रशंसा। अन्वयः, अन्वयार्थः, सरलार्थः | | |
| | पाठः - १५ | वाल्मीकिरामायण-किष्किन्धाकाण्डे तृतीयसर्गे - राम-हनूमत्-संगमः- (३६-३९) श्लोकाः – लक्ष्मणकर्तृकं सुग्रीवसख्यस्वीकरणम्। अन्वयः, अन्वयार्थः, सरलार्थः | | |
| **४** | **चतुर्थः परिच्छेदः** | **काव्याध्ययनम्-** | **८०** | **३४** |
| | | **कर्णभारम्-** | | |
| | पाठः - १६ | कर्णभारम्- कर्णस्य परितापः | | |
| | पाठः - १७ | कर्णभारम्- अस्त्रस्य वृत्तान्तः | | |
| | पाठः - १८ | कर्णभारम्- कवचकुण्डलदानम् | | |
| | | **किरातार्जुनीयम् -** | | |
| | पाठः - १९ | किरातार्जुनीयम् (प्रथमसर्गे १-६ श्लोकाः)- वनेचरस्य चरानुरूपं वचनम् | | |
| | पाठः - २० | किरातार्जुनीयम् (प्रथमसर्गे ७-१३ श्लोकाः)- कपटस्य दुर्योधनस्य धर्माचरणम् | | |
| | पाठः - २१ | किरातार्जुनीयम् (प्रथमसर्गे १४-२३ श्लोकाः)- शङ्कितस्य दुर्योधनस्य नीतिकौशलम् | | |
| | पाठः - २२ | किरातार्जुनीयम् (प्रथमसर्गे २४-३० श्लोकाः)- युधिष्ठिरस्य प्रबोधः | | |

# प्रश्नपत्रस्य प्रारूपम् (Question Paper Format)

विषयः - संस्कृतसाहित्यम् (२४८) (Sanskrit Sahitya) स्तरः- माध्यमिककक्षा

परीक्षाकालावधिः (Time)- होरात्रयम् (३ hrs) पूर्णाङ्काः (Full Marks)- १००

## लक्ष्यानुसारि अङ्कविभाजनम्

| विषयाः | अङ्काः | प्रतिशतं योगः |
|---|---|---|
| ज्ञानम् (Knowledge) | २५ | २५% |
| अवबोधः (Understanding) | ४५ | ४५% |
| अनुप्रयोगकौशलम् (Application Skill) | ३० | ३०% |
| **महायोगः->** | **१००** | |

## प्रश्नप्रकारेण अङ्कभारविभाजनम्

| प्रश्नप्रकारः | प्रश्नसंख्या | अङ्काः | योगः |
|---|---|---|---|
| दीर्घोत्तरीयप्रश्नाः (LA) | ५ | ६ | ३० |
| लघूत्तरात्मकप्रश्नाः (SA) | १० | ४ | ४० |
| सुलघूत्तरीयप्रश्नाः (VSA) | १० | २ | २० |
| बहुविकल्पीयप्रश्नाः एकाङ्कप्रश्नाः स्तम्भमेलनं रिक्तस्थानपूर्तिः च | १० | १ | १० |
| **महायोगः->** | **३५** | | **१००** |

## पाठ्यविषयविभागानुसारि भारांशः

| विषयघटकाः | अङ्काः | स्वाध्यायाय होराः |
|---|---|---|
| १. सुभाषितादिकम् | ३२ | ७८ |
| २. काव्यपरिचयः | १६ | ४० |
| ३. रामायणाध्ययनम् | १८ | ४२ |
| ४. काव्याध्ययनम् | ३४ | ८० |
| **महायोगः ->** | **१००** | **२४०** |

## प्रश्नपत्रस्य काठिन्यस्तरः

| प्रश्नस्तरः | अङ्काः |
|---|---|
| कठिनः (Difficult) (मेधावी एव उत्तरदाने समर्थः) | २५ |
| मध्यमः (Medium) (नित्यं पठन् अध्यवसायी छात्रः उत्तरदाने समर्थः) | ५० |
| सरलः (Easy) (समग्रां पाठसामग्रीम् अल्पशः पठन् छात्रः उत्तरदाने समर्थः) | २५ |

